# 'प्रबन्ध-कल्पलतिका'

Vol. II

द्वितीयस्तवक-

## समालोचना

अध्यापकेन

श्रीमता रेवतीकान्तभट्टाचार्य्येण

सम्पादिता







कलिकाता, ५८ नं कर्णओयालिस ष्ट्रीटस्थ-

संस्कृतपुस्तकालयात्

श्रीअखिलबन्धुभट्टाचार्य्येण-प्रकाशिता

परिवर्त्तिता परिवर्द्धिता च

द्वितीयावृत्तिः ] १९२६ [ मूल्यम् १॥० रौप्यम्

# 'प्रबन्ध-कल्पलतिका'

Vol. II

द्वितीयस्तवक-

समालोचना

अध्यापकेन

श्रीमता रेवतीकान्तभट्टाचार्य्येण

सम्पादिता







कलिकाता, ५८ नं कर्णओयालिस ष्ट्रीटस्थ-

संस्कृतपुस्तकालयात्

श्रीअखिलबन्धुभट्टाचार्य्येण · प्रकाशिता

परिवर्त्तिता परिवर्द्धिता च

द्वितीयावृत्तिः ] १९२६ [ मूल्यम् १॥० रौप्यम्

पुस्तक प्राप्तिस्थान—
संस्कृतपुस्तकालय
५८, कर्णवालिस् ष्ट्रीट्, कलकत्ता ।



सर्वस्वत्वसुरक्षित

कलिकाता, ४ नं श्यामस्कोयारलेनस्थ
संस्कृतमुद्रायन्त्रे
श्रीसुधांशुभूषण भट्टाचार्य्यद्वारा मुद्रित ।

ॐ पितृभ्यां नमः

# ग्रन्थार्पणम्

आसीदाशशिसूर्य्यमूर्ज्जितयशा विद्योतितस्तेजसा
विद्याशेवधिवारिधिर्निरवधिः श्रीचन्द्रनारायणः ।
काश्यां धीरधुरन्धरेषु महतीं भीतिं समुत्पादयन्
लीलाभिर्विचचार चारुचरितो यो न्यायपञ्चाननः ॥

दीप्तः कीर्त्तिविभाभिराविरभवत् तस्माच्च रत्नाकरात्
राधाकान्तशिरोमणिर्म्मलिनतासम्पर्कशून्यश्चिरम् ।
येनादर्शि गभीरशास्त्रगहनेष्वर्थो निगूढः स्फुटम्
पूतं नाम पितुः समुज्ज्वलयता क्षौणीमलंकुर्वता ॥

सूनुस्तस्य महोदयस्य रजनीकान्तेति नामाभवत्
लोकातीतमनीषयातिनिपुणस्तर्कादिविद्यानुगः ।
तेभ्यो ग्रन्थमिमं तदन्वयभवः श्रीरेवतीकान्तकः
भक्त्याद्यार्पयति प्रबन्धलतिकासंज्ञं निवापोपमम् ॥

## निवेदनम्—

अयुक्तं यदिह प्रोक्तं प्रमादेन भ्रमेण वा ।
दीने मयि दयावन्तः सन्तः संशोधयन्तु तत् ॥

"विगतशारदीयपूजावकाशानन्तरमेव इयं प्रबन्ध-कल्पलतिका" आयसाक्षरविन्यस्ता प्रकाश्यतामिष्यतीति समन्तात् प्रचारितवानासम्। किन्तु तदारभ्य ग्रन्थस्योपादानादीनां प्राच्यदेशीय-महाहव-निबन्धनदुष्प्राप्यतया सा आशा सुदूरपराहतेव जातेति नितरां लज्जितोऽस्मि तच्चिन्तयितुमपि। यद्यपि एतावता कालेन केवलं ग्रन्थसमूहसमालोचनं पौराणिकेतिवृत्तमात्रञ्च संवृत्तं, तथापि वैदेशिकग्राहकाणामाग्रहातिशय्येन तथान्तरङ्गबन्धुवर्गनिर्वन्धबाहुल्येन च इममंशमादायैव प्रथमपाठः प्रथमांशो वेति निर्दिश्य इयमेव प्रबन्ध-कल्पलतिका जनसमाजे प्रथमं प्रकाशिता।

समालोचनाया गुरुत्वमवितथं सर्वजनविदितम्। अतो मादृशानामल्पधियामस्मिन् समालोचने यत्नः केवलमुपहासायैव नास्त्यत्र कोऽपि सन्देहावकाशः, तथापि बलवद्वासनावासितान्तःकरणस्य स्वाधिकारमविचारयतो मे मनस्विनामपि दूरारोहे कर्म्मणि प्रवर्त्तमानस्य अनुष्ठानमिदं नासद्विचारसहं, सहृदय-हृदयमेवात्र प्रमाणम्।

यन्न्यस्थितेऽस्मिन् ग्रन्थे शरीरास्वस्थतया, तथा क्रूरकालस्य कुलिश-कठोरशासनेन शिशोरनुजात्मजस्य आकालिकमहाप्रयाणेन च—यस्य तावत् विकशदरविन्द-कुसुमकोरकमिव कोमलं मुखमण्डलं, अलक्तरञ्जितनवनीतमिव कान्तं काय-सुसन्निवेशम्

नवपल्लवसंस्तरमिव स्निग्धं लावण्यम्, अश्राश्रुतं पीयूष-वर्षि वाक्यजातं नाद्यापि विस्मरामि; प्रत्युत मूर्त्तिमतीव तत्-स्मृतिरहर्निशं मां तद्दर्शनप्रलोभनेन प्रतारयति च नितराम्। तथा-विधान्तर्निहितसन्तापमशमयन् संशोधन-प्रयासं यथायथमङ्गीकर्त्तु-मसमर्थं परम् आयसाक्षरनियोजकानाम् अनवधानतया कुत्रचिद्-भ्रममवलोकयद्भिः सहृदयैर्भवद्भिरनुकम्पनीयोऽयं वराकः। आशंसते च नवीनेनानेन ग्रन्थेन यदि कस्यापि कथं कथमप्युप-कृतिर्भवेत् तदा श्रमोऽयं साफल्यमेष्यतीति कृतं विस्तरेण।

## द्वितीयावृत्तेर्विज्ञप्तिः—

इयं खलु प्रबन्धकल्पलतिका सभ्यपरिषदि छात्रसंसदि च साति-शयनवीनापि सामाजिकानां तथा विद्यार्थिनाञ्च कृपालोलकटा-क्षावलोकनेन स्वल्पेनैव दिनेन निःशेषितत्वाद् यदा पुनर्मुद्रण-यन्त्राधीना नीता; तदाप्रभृति तेषामिवाधेतृणां लेख्यानुगतं लेख्यमासाद्य तामर्पितुमसमर्थतया एकतो यथा क्लेशिता इमे खलु वराकाः, तथापरतो निरतिशयमात्मानञ्च पुणीमहे; मन्यामहे च, तेन गीर्व्वाणवाणीचरणाराधितानां नृणामद्यापि नाम परमचरम-विरलत्वं नोपपन्नम्। अथवा मादृशान् प्रति तेषां प्रभूततरप्रीति-रेवान्यतमप्रकटनं नाम। भवतु तद् वितथमवितथं वा, भृ...सपास्तु तद्धारणा वा। यदेतादृशग्रन्थस्य विद्वद्गोष्ठीषु प्रयोजनमनुभवामः, तर्हि मामकानामकिञ्चित्करमननप्रसवित्री विशिष्टोपायनीकृतम्, अर्पितञ्चासीत् तस्मैत्र आशातिरिक्तं गौरवञ्च

तैरेव विद्वद्वरिष्ठैरिति। परन्तु तयास्मदीययैवास्यामावृत्तौ पूर्व्वं संस्करणतो बहूनानाम् [अनर्घराघव-वेणीसंहार-स्वप्नवासवदत्त-नागानन्द-रत्नावली-कर्पूरमञ्जरी-विद्धशालभञ्जिकादीनाम्] ग्रन्थानां समालोचनं यथायथं संयोज्य नानाविषयेऽस्य गुरुत्वं सौन्दर्य्यञ्च सम्पादयितुं प्रयतामहे। परं न संजानीमहे तेन पुनः कीदृशाः किल कृतकार्य्याः सम्वृत्ता इमे नूनमास्रवा इति।

हन्त! परमत्र संस्करणे प्रबन्धकल्पलतिकामिमां प्रथम-द्वितीय-तृतीयांशक्रमेण त्रिधा विभज्य प्रथमांशे आदर्शप्रबन्धपुञ्जान् एवं तद्रचनादीन् किञ्चाभिनवरचनाशिक्षेप्सूनां शिक्षाविषये यान् यानेव प्रयोजनीयान् तानेव विविधग्रन्थतः स्वीयधारणातो वा सङ्कलय्य सरलसहजभाषया सन्निबध्य कश्चिदपरो ग्रन्थो विहितो यन्नाद्यापि संस्कृतभाषासु तादृशो ग्रन्थो निर्म्मितपूर्व्व इति। अत्र च द्वितीये काव्यनाटकादीनां समालोचना। तृतीये तावद् अज्ञातप्राचीनप्रसिद्धकवीनां जीवनीनाम सन्दर्भान् अकारादि-मातृकावर्णपर्य्यायेण समुपन्यस्य संपूर्णो नीतो ग्रन्थः। तया तयैव दिशा विहिते ग्रन्थे भद्रमभद्रं वा समुपपादितं तन्नो न विचारार्हम्। परमस्य पर्य्यालोचकाः कुशाग्रैकदेश्यसुसूक्ष्मप्रज्ञापारमिता बलवन्तो महान्तः उत प्रियदर्शनाः सुकुमाराः कुमाराश्च प्रमाणमिति सुधाधिकवचसा।

कलिकाता
१३३२ वङ्गाब्दीया
उत्तरायणसंक्रान्तिः

विधेय—
श्रीरेवतीकान्तस्य

## पुस्तकस्थविषयाणाम् अनुक्रमणिका—

विषयाः पृष्ठाङ्काः



——(०)——

## आमादेर प्रकाशित पुस्तकावली—

१। हितोपदेशीयमित्रलाभ—इहाते मूल, अन्वय, वाच्यपरिवर्त्तन, विस्तृत टीका, पाठान्तर, सरलहिन्दी ओ वङ्गानुवाद प्रश्नसंग्रह, विष्णुशर्म्मजीवनकथा, ग्रन्थपरिशिष्ट, श्लोकानुक्रमणिका, सुदृश्य चित्रसह मनोरम बाँधाइ [व्याकरणेर प्रथम परीक्षार पाठ्य] मूल्य १॥० टाका।

२। श्रुतबोध—इहाते मूल, अन्वय, उत्कृष्टटीका, हिन्दी ओ वङ्गभाषानुवाद पुस्तक परिशिष्ट एवं रघुवंश कुमारसम्भव प्रभृति पुस्तक हइते प्रत्येकछन्देर उदाहरण संग्रह करिया टीकार नीचे नीचे देओया हइयाछे। श्रुतबोधेर एरूप उत्कृष्ट संस्करण एयावत् आरवाहिर हय नाइ मूल्य ।/० आना।

३। कुमारसम्भव—इहाते मूल, अन्वय, वाच्यपरिवर्त्तन, मल्लिनाथेर टीका, हिन्दी ओ वङ्गभाषानुवाद, प्रश्नोत्तर, कविजीवनी, श्लोकस्थ पौराणिक वार्त्ता, सुदृश्यचित्र प्रभृति सह मनोमुग्धकर बाँधाइ मूल्य १॥० देड़टाका।

४। रघुवंश---इहाते ओ कुमारसवम्भवत् समस्त विषय परिपूर्ण। [यन्त्रस्थ] मूल्य ३॥० टाका।

५। मालविकाग्निमित्र—उत्कृष्ट ग्लेज कागजे अति उपादेय टीका, पुस्तक समालोचना प्रभृति सह मूल्य १॥०

६। दशकुमारचरित—-अतिउत्कृष्ट निरन्तरा व्याख्या, हिन्दी ओ वङ्गभाषानुवाद, ग्रन्थसमालोचना प्रभृति सह [२यावृत्ति यन्त्रस्थ] मूल्य २) टाका।

७। किरातार्ज्जुनीय—इहाते मूल, अन्वय, वाच्यपरिवर्त्तन, मल्लिनाथकृतटीका, अनुक्तालङ्कारनिर्द्देश, हिन्दी ओ वङ्गभाषानुवाद, विस्तृत समालोचना, ग्रन्थकार जीवन-कथा,

श्लोकानुक्रमणिका सह मूल्य २॥० टाका।

८। **सांख्यसार**—टीका ओ परीक्षार प्रश्न सह मूल्य ॥०

९। **सांख्यकारिका**—गौड़पादभाष्य, कारिका, उत्कृष्ट टीका ओ वङ्गानुवाद सह मूल्य ॥० आना।

१०। **योगसूत्र**—मणिप्रभाटीका, हिन्दी ओ वङ्गभाषानुवाद, सूत्र पद्य सूत्रानुक्रमणिका विस्तृत समालोचना सह मूल्य १॥० टाका।

११। **वेदान्तसार**—रामानुजकृत उत्कृष्टव्याख्यासह १॥०

१२। **मीमांसापरिभाषा**—अतिउपादेय टीका सह ॥०

१३। **सारमञ्जरी**—अतिउत्कृष्ट टीका सह ॥० आना

१४। **लिङ्गानुशासन**—संस्कृत लिङ्गनिर्णयात्मक अतिउत्कृष्ट पुस्तक, वङ्गानुवाद सह, मूल्य ॥० आना।

१५। **लकारार्थनिर्णय**—संस्कृत पाठार्थीर परमोपयोगी मूल्य ।० आना।

१६। **सामवेदसंहिता**—[आग्नेयपर्व्व] सायणभाष्य, ऋषिछन्दोदेवता वङ्गभाषानुवाद ओ परीक्षाप्रश्न सह मूल्य ॥।०

१७। **जैमिनीयन्यायमाला**—[१म २य अध्याय] ग्रन्थकार कृत टीका सह [संस्कृतपरीक्षापाठ्य] मूल्य १॥० टाका।

१८। **वृत्तरत्नाकर**—अतिउत्कृष्टटीका, प्रस्तार, छन्दोनुक्रमणिका ओ विस्तृत समालोचना युक्त [विहारोत्कलपरीक्षापाठ्य] मूल्य ॥।० आना।

१९। **प्राकृतप्रकाश**—वररुचिकृत प्राकृतभाषार व्याक-

स्थ, भामहवृत्ति ओ सम्पादककृत ग्रन्थपरिशिष्ट सह उत्कृष्ट बाँधाइ मूल्य १।० टाका ।

२०। प्राकृतलक्षण—[चण्डकृत प्राकृतभाषार व्याकरण] टीका, प्राकृत-भाषार विस्तृत समालोचना ओ सूत्रानुक्रमणिका सह; मूल्य १।० टाका।

२१। संस्कृतमञ्जरी—प्रथम संस्कृत शिक्षार्थीर परमोपयोगि पुस्तक, मूल्य ।/० आना।

२२। छन्दःसारसंग्रह—बहु शास्त्र हइते छन्देर सार संग्रह करिया एइ ग्रन्थ लिखित हइयाछे। छन्दः शिक्षार्थीर पक्षे एरूप सहज शिक्षनीय पुस्तक अद्यापि प्रकाशित हय नाइ। एइ एकखानि पुस्तक पाठकरिले सकल छन्दःशास्त्रे विशेष अभिज्ञता जन्मिबे। मूल्य २) टाका ।

२३। प्रबन्धकल्पलतिका—[प्रथमस्तवक 'रचनाशिक्षा'] इहा आधुनिक प्रणालिते संस्कृते रचनाशिक्षिबार अति अपूर्व्व पुस्तक। इहाते प्रबन्धस्वरूप, प्रबन्धप्रकार, प्रबन्धेर भाषा, भेद, वाक्य, वाक्यांश, पदान्वय, गद्यपदस्थापन-व्याख्या, पदस्थापनादर्श, वाक्यवृद्धि, वाक्यसंक्षेप, अर्थविवृत्ति, अर्थ, व्याख्या, भावार्थ, तात्पर्य्यार्थ, संक्षेपार्थ, अनुक्तपद-पूरण, चिह्नादि [ , ; : । ! ? "—" ], दोष-गुण-रीति प्रभृति बहुविषय ओ बहुप्रबन्ध संयोजित करा हइयाछे। मूल्य २) टाका।

२४। प्रबन्धकल्पलतिका—[तृतीयस्तवके 'कविजीवनी'] इहाते प्राचीन कविदिगेर जीवनी, पौराणिक वार्त्ता प्रभृति बहु विषय युक्त हइयाछे [यन्त्रस्थ] मूल्य १॥० टाका।

२५। लघुसिद्धान्तकौमुदी—वरदराजकृत मूल, वृत्ति

স্বামী অনিত্তনন্দকৃষ্ট প্রাঞ্জল বঙ্গানুবাদ সহ। এই অনুবাদের সাহায্যে পাঠার্থী নিজে নিজে অধ্যয়ণ করিতে পারিবেন। মূল্য ২৷৷০ টাকা

২৬। **কলাপব্যাকরণ**—টীকা, পঞ্জী, কবিরাজ, বিদ্যাসাগর, কুলচন্দ্র, ব্যাখ্যাসার, পঞ্জী-পত্রিকা, পাদ-টীকা, পাঠান্তর এবং সন্ধি ও নামপ্রকরণ, কারক, সমাস প্রভৃতির পরিশিষ্ট-সূত্রবৃত্তি এবং তাহার অনুবাদ। নামপ্রকরণাদিসূত্রে পদ-পরিচয় ও যাবতীয় সূত্রার্থ, তাৎপর্য্যার্থ, পাঠ-সঙ্গতি, পদসাধন-প্রণালী ও সুবিস্তৃত সরল বাংলা অনুবাদ এবং যাবতীয় সূত্রসূচী, প্রভৃতি ২৩শ প্রকার বিষয় সহ সুবৃহৎ সন্ধি-চতুষ্টয়বৃত্তি সম্বলিত পূর্ব্বার্দ্ধ মূল্য ৫৷৷০ টাকা।

২৭। **সন্ধিবৃত্তি**—নবীন শিক্ষার্থীর পক্ষে এইরূপ উৎকৃষ্ট পুস্তক অদ্যাপি মুদ্রিত হয় নাই। অক্ষরাভিজ্ঞ বালক এই পুস্তক পাঠ করিয়া অনায়াসে সন্ধি বিষয়ে জ্ঞান লাভ করিতে পারেন। বৃহদক্ষরে সূত্র, ত দুর্গসিংহকৃত বৃত্তি, অতিবিস্তৃত বাংলানুবাদ এই অনুবাদে চ, বা, প্রভৃতির অর্থও ব্যাখ্যা করিতে উপেক্ষিত হয় নাই। নানাবিধ টিপ্পনী ও প্রমাণ প্রভৃতি জ্ঞাতব্য বিষয় সন্নিবদ্ধ করিতে কোনরূপ ত্রুটী হয় নাই মূল্য ৷৷০।

২৮। **শ্রীশ্রীচণ্ডী**—অতিবিশুদ্ধভাবে বড় বড় অক্ষরে তালপত্রেমুদ্রিত, ইহাতে মার্কণ্ডেয়প্রতি ব্রহ্মবাক্য, চণ্ডীপাঠক্রম, চণ্ডীপাঠফল, একবৃত্তাদি-পাঠফল, চণ্ডীপূজা, চণ্ডী-ধ্যান, পাঠনিয়ম, চণ্ডী গায়ত্রী, অর্গলস্তোত্র, কীলকস্তব, দেবীকবচ, দেবীসূক্ত, রাত্রিসূক্ত, শাপোদ্ধারমন্ত্র, উৎকীলনমন্ত্র, প্রার্থনামন্ত্র, প্রভৃতি সহ। অতি উৎকৃষ্ট সংস্করণ। মূল্য ১৷০ পাঁচসিকা।

২৯। **কালীপূজাপদ্ধতি**—[তালপত্রে]–ইহাতে পূজার কোন অংশ বা মন্ত্র বাদ বা বরাত দেওয়া হয়নাই। আবশ্যকীয় মুদ্রা-চিত্র সহ মূল্য ৷৷৵০

৩০। **শ্রীমদ্ভগবদ্গীতা**—মূলশ্লোক, অন্বয়, শ্রীধরস্বামি-টীকা, অতি-প্রাঞ্জল বাংলানুবাদ, গীতামাহাত্ম্য, ধ্যান, পাঠপ্রণালী ইত্যাদি সহ মূল্য ১৷০

৩১। **পঞ্চগীতা**—ইহাতে রামগীতা, উত্তরগীতা, শান্তিগীতা, পাণ্ডবগীতা ও পরাশরগীতা এই পাঁচখানি গীতা আর্য্যশাস্ত্রের সারসর্ব্বস্ব, আমরা ইহা বিস্তৃত সরল বাংলানুবাদের সহিত প্রকাশ করিয়া নাম মাত্র মূল্যে গ্রাহকদিগকে দিতেছি, মূল্য ৷৷০ মাত্র, [৩২] শাক্তানন্দতরঙ্গিনী ১৲, [৩৩] উপনিষদাবলী ১৷৷০, [৩৪] আহ্নিকতত্ত্বমালা ১৷০, [৩৫] ভাষাপরিচ্ছেদ ১৷৵০, ইত্যাদি

# प्रबन्ध-कल्पलतिका

# द्वितीयस्तवके

## समालोचना

### मङ्गलाचरणम्

यस्याकाशनिकाशभालनिलये संस्थेन पत्तद्वये
वृद्धिर्नास्ति लयो ग्रहात् परिभवो विघ्नैः किमन्यैः पुनः ।
ज्योत्स्नां स्वाञ्च ततो जहाति न कदा रात्रिन्दिवं शाश्वतीं
वन्दे तेन समं सुमूर्त्तिरजनीकान्तं भृशं मौलिना ॥१॥
क्व वा कवेः काव्यमपूर्ववस्तु क्व मे मतिर्मन्दधियो जनस्य ।
तथापि काव्यस्य विचारणाशा गिरिं हि पङ्गो ननु तर्तुमिच्छा ॥२॥
ये नाम सन्तीह बुधा अनेके नैकस्य चिन्ता परिजायमाना ।
एवंविधस्यापि विचारपूर्वग्रन्थस्य कस्यास्ति प्रयोजनं नु ॥३॥
यथामति ग्रन्थमिमं तदर्थं गुम्फामि सन्तः परिमण्डयध्वम् ।
हीनैस्तु गन्धैः कुसुमैर्निकृष्टैर्नु किं सुराणां भवतीति पूजा ॥४॥

### रघुवंशसमालोचना—

इह तावत् यावन्ति सन्ति महाकाव्यानि तेषु कविकुलभास्करस्य श्रीमतः कालिदासस्य सुधास्राविणीलेखन्युद्गतं भगवतो

वैवस्वतोऽन्वयकीर्तनात्मकं रघुवंशाख्यं महाकाव्यं तृष्णा-विशुष्ककण्ठस्य जलमिव, मध्यन्दिनोत्तापितस्य छायेव, विरह-गुरुकस्य प्रियसङ्गम इव, प्रोषितभर्तृकाया दयिताधिगम इव, शिशोः प्रथमोच्चारिता गीरिव, अङ्कुरितयौवनायाः अपाङ्गदृष्टिरिव, आप्याययतितरां चेतनानां चेतांसि इति अखण्डनीयो वादः। प्रथ-मतः काव्येऽस्मिन् भूयिष्ठानि रसवन्ति नीतिप्रतिपादकानि धर्म्म-बोधकानि वस्तुस्वभाववर्णनानि च समाकर्षन्ति निभृततरमखिल-विबुधचेतांसि अतिमात्रम्। कविरप्यत्र पूर्व्वकृतैर्ग्रन्थैरस्तमित-शब्दतृष्णोऽर्थप्राधान्यसमासक्तचित्तः करिष्यमाणस्य काव्यस्य तादृशं गौरवमुद्भावयन् आदौ—

'वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥'

इत्यनेन समप्रधानेऽपि शब्दार्थेऽर्थस्य परमेश्वरदृष्टान्तवर्णनेनार्थ-मेव प्रधानतरं मन्यत इति स्फुटत एव दृश्यतां सभ्यैः। तथा दिलीप-रघु-अज-दशरथादीनां वर्णनोपक्रमे साधारणानावेदयन् कविः यदिह शाश्वतिकं यशः समधिगम्य जिगमिषूणां त्याग-स्वीकारः वंशमुन्नमयितुमभिकाङ्क्षतां ज्ञानादीनामधिगमः पर-हृदयजिगीषूणां विनयः, प्रभुकलत्राणाधिगन्तुमनसां गुरुषु गरीया-ननुरागः, एवमात्मजीवनत्यागमुत्साहेन परहितसाधनप्रयोजनम् समाधेयम्, गुरूणामतिकठोरापि शासनपद्धतिः अविचारितैव सर्वथा पालनीयेति कविः सविशेषं न्यवेदयत्। एवमपि च यत् प्रजानामनुरञ्जनसमर्थ एव राजपदेनाभिधेयः। विनश्वरे जगति

सत्यमेव परमो धर्म्मः, सत्यानुशीलनपरा स्वमङ्गलञ्च जिहासितुमपि प्रभवति, पितृवचनपरिरक्षणाय तनयः देवैरपि वाञ्छितं राजसिंहासनं तुच्छोपलखण्डवत् सानन्दं परित्यक्तुं समर्थोऽस्ति। एवमपि पितॄणां तृप्तये यत्किमपि संसारसुखसाधनं परिहाय काननावनीमभिगच्छति पुत्रः। वर्तमाने गुरुकठोरे कर्त्तव्यताज्ञाने स्वीयहृत्पिण्डं स्वहस्तेन छित्वा करणीयतायाश्चरणेषु उपायनीकर्त्तुमिव समर्थयते कर्तव्यतारूणदीप्तो जितेन्द्रियः। स्वाधीनचित्तानां भूदेवानां समक्षं प्रासादतलविलासिनो भूपतयः तथा पर्णकुटीरोदरशायिनो भिक्षामात्रोपजीविनस्तुलाग्रमूलग्रमेव समादधातितराम्। इत्थमेव समाजहितसाधनशरणीमभिन्यस्य तच्चरितादीनां सुसमावेशेन विकाशयति अनन्यसुलभां प्रतिभां कविकालिदासः। एवमपि च विपुलसमृद्धिशालिनं साम्राज्यं सुखमयोऽपि संसार श्मशानभस्मत्वेन यथैव परिणम्यते, तथा तथा परस्परविरुद्धभावानां समावेशेन विजयते कविः, तस्य रघुवंशाख्ये महाकाव्ये अतिमात्रम्। दर्शयति च यत् वैवस्वदन्वयोद्भवानां पूर्वपूर्वतनानां नृपानामधस्तने क्रमश एव अयोध्याधिपतीनां प्रातरुद्यदादित्यतो निदाघमध्यन्दिनोस्नपरिपूर्णस्य सहस्रदीधितेरिव दशरथशासनात्यये अयोध्यासाम्राज्याधिपस्य पुष्कलो विकाशः। परतश्च रामचन्द्रस्य पर्य्यवसाने नीलनीरदैरूपनिबद्धभास्वरमण्डलमिव परवर्तिनां कुशादीनां भूपालानामाश्चर्य्यपरिणतिरधिगता। यथैव च दिवावसाने प्रक्षीणापि खद्योतिकाद्युतिः द्योतयति तमिस्रातामसीं किञ्चिन्मात्रम्। काव्येऽस्मिन् आदितः समाप्तिं यावत

प्रतिपदमेव प्रसादमाधुर्य्यगुणयोः सुसमावेशः। उपमेयोपमेययोः साधर्म्म्यं तरलमतयो बालका अपि अप्रयासेन प्रतिपत्तुमर्हन्ति, न केनचिदप्रसिद्धेन पदार्थेन वा समुपन्यस्तं सादृश्यं कविना कालिदासेन। साकेतनगरस्य वर्णनमिन्दुमतीवियोगप्रयुक्तराजविलापवर्णनञ्चातितरामाकर्षति सहृदयहृदयस्तलम्, तथाहि—

'शशिनं पुनरेति शर्वरी दयिता द्वन्द्वचरं पतत्रिणम्।
इति तौ विरहान्तरक्षमौ कथमत्यन्तगता न मां दहेः॥'

'स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम्।
विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया॥'

'अथवा मम भाग्यविप्लवादशनिः कल्पित एव वेधसा।
यदनेन तरुर्न पातितः क्षपिता तद्विटपाश्रिता लता॥

इत्यादिश्लोकैः यथैव भावनिवहमुपस्थापयति कविः, मन्ये कविताशतकेनापि कविरन्यः तथात्वं न प्रतिपादयितुं प्रभवति। अपि च—

'दूरादयश्चक्रनिभस्य तन्वी तमालतालीवनराजिनीला।
आभाति वेला लवणाम्बुराशे र्धारानिबद्धेव कलङ्करेखा॥'

'विचेयतारका शशिनेव शर्वरी' इत्यादि श्लोकाधिगतार्थाः के न मुह्यन्ति सहृदयाः? वस्तुतः यादृगेव सरलपदोपन्यासपुरःसरं भावनिवहं तथा अलङ्कारसन्निवेशनञ्च सारल्येन कविरुपस्थापयति रघुवंशे काव्यमुख्ये तादृग्भावविशुद्धं पद्यं सारस्वतभाण्डारसंगृहीतमञ्जुलकवित्वपूर्णप्रबन्धपुञ्जेषु द्वित्राण्यपि सन्ति किं नवेति मामकानां हृदयम्। किन्तु काव्येऽस्मिन् अश्वघोषप्रणीतबुद्धचरि-

तस्य कतिश्लोकेन समं समानपदयोजनादिभावनिवहान् तुल्यान् समीक्ष्य मन्यन्ते केऽपि काव्यकलासमालोचकाः यत् एकेनाप्यपरस्याहृय्यते काव्यगठनपद्धतिः भावश्चेति। यथा हि बुद्धचरिते—

'वातायनेभ्यस्तु विनिःसृतानि परस्परोपासितकुण्डलानि।
स्त्रीणां विरेजुर्मुखपङ्कजानि सक्तानि हर्म्येष्विव पङ्कजानि ॥'

रघुवंशे—

'तासां मुखैरासवगन्धगर्भैर्व्याप्तान्तराः सान्द्रकुतूहलानाम्।
विलोलनेत्रभ्रमरैर्गवाक्षाः सहस्रपत्राभरणा इवासन् ॥'

बुद्धचरिते अश्वघोषः—

'ततः कुमारः खलु गच्छतीति
　　श्रुत्वा स्त्रियः प्रेष्यजनात् प्रवृत्तिम्।
दिदृक्षया हर्म्यतलानि जग्मुः
　　जनेन मान्येन कृताभ्यनुज्ञाः ॥

रघुवंशे—

'ततस्तदालोकनतत्पराणां सौधेषु चामीकरजालवत्सु।
बभूवुरित्थं पुरसुन्दरीणां त्यक्तान्यकार्य्याणि विचेष्टितानि ॥'

इत्यादि कवितां पर्यालोच्य बुद्धचरितसंस्करणकर्त्तृप्रमुखाः इ. वि. काउलप्रभृतयो विद्वांसः मन्यन्ते कालिदास एव बुद्धचरितादपहृयते भावनिवहं रघुवंशे, तत् प्रमाणयितुञ्च तस्य काव्यस्य पातनिकायामसकृदेव काव्यसंस्करणकर्त्ता काउलमहोदयः अवतारयति युक्तिजालम्। किन्तु सविशेषं पर्यालोचिते बुद्धचरिते तस्य सर्वापि चेष्टा विफलतामेवाधिगतेति मन्यामहे, यतस्तत्काव्यस्य

विषयवर्णनमेवेदं प्रत्याययति चेतनानां चेतांसि यत् कालिदास-स्यैव भावपटलं समादधाति मायादेवीसूतचरित्ररचयिता कविः श्रीमान् अश्वघोषः। येन स कालिदासस्वकपोलकल्पितस्य कुमारसम्भवस्य मात्मसात्करणव्यापारं संचिनोत्यविकलमात्मीये काव्यमुख्ये यथाहि—

'शैलेन्द्रपुत्रीं प्रति येन विद्धो देवोऽपि शम्भुश्चलितो बभूव।
न चिन्तयतीष तमेव बाणं किं स्यादचित्तो न शरः स एषः॥'

इति कविता एव स्मारयति सविशेषमश्वघोषस्य पूर्व्ववर्त्तित्वं कालिदासस्य नितरामश्वघोष एव कालिदासस्य भावापहारीति पूर्व्वापरयोः पूर्व्ववर्त्तिनोऽदृष्टसन्दर्भात्। अपि च उत्कीर्णादि-विविधोपायेन सुसमाहितं यत् शकाधिपस्य कनिष्कस्य धर्मोपदेष्टा एव शाक्यसिंहचरितरचयिता अश्वघोषः। शकपतेः कनिष्कस्य च खृीष्टप्रथमशके किलाविर्भावकालः, नितरां धर्म्मगुरोरश्वघोष-स्यापि स एव समयः। कालिदासस्य तु खृीष्टप्रथमशकाब्दितोऽग्रे जन्म इति कालिदासशीर्षके प्रबन्धे सप्रमाणं प्रपञ्चितमस्मा-भिर्नेहोक्तं पुनरुक्तिभयात्। एतावता कालिदासस्य वृद्धत्वप्रमाणे-नायमेव प्रतिपन्नः यत् कालिदास एव बुद्धचरितरचयितुरादर्शः, न कालिदासस्य सः। वस्तुतः काव्यकलाचरनपद्धतौ कविकालि-दासस्य यादृगेव पाटवमस्माभिः परिलक्ष्यते, न तादृशमन्येषामेव कवीनामिति कृतं विस्तरेण।

**तस्य सर्गसंक्षेपः**—प्रथमसर्गे—कवेरहङ्कारपरिहारः। तत्प्रसङ्गे समासेन रघुवंशीयानां चरितवर्णनम्। वैवस्वतमनुवंशे

दिलीपस्य जन्म, तच्चरित्रवर्णनञ्च। पत्न्या सुदक्षिणया सह राज्ञो दिलीपस्य वशिष्ठाश्रमगमनम्। तदाश्रमवर्णनम्। दिलीपस्य सुत-प्रतिबन्धकसुरभिशापश्रवणम्। नन्दिन्याः आगमनम्। नन्दिनी-माहात्म्यवर्णनम्। नन्दिनीदर्शने दिलीपस्य भाविपुत्रलाभाशंसा। दिलीपेन वशिष्ठादेशस्याङ्गीकारः। ब्रह्मचर्य्यावस्थितस्य राज्ञः मुनिकल्पितायां पर्णशय्यायां शयनम्। ततः निशावसाने तदीय-शिष्याणां वेदाध्ययनध्वनिना दिलीपस्य निद्राभङ्गश्च।

द्वितीयसर्गे—प्रभाते दिलीपस्य पत्नीप्रतिग्राहितगन्धमाल्यायाः स्वेच्छानुगामिन्या नन्दिन्या अनुगमनम्। नन्दिन्याः शुश्रूषावर्ण-नम्। राज्ञो वनोपशोभादर्शनवर्णनम्। दिनावसाने नन्दिन्या सह राज्ञः पुनराश्रमप्रत्यावर्त्तनम्। सपत्नीकेन पार्थिवेन दोहाव-साने न्यस्तबलिप्रदीपायाः नन्दिन्याः शुश्रूषणम्। अष्टमदिवसे नन्दिन्याः सिंहाक्रमणवर्णनम्। सिंहं हन्तुकामस्य नृपतेर्भुजावष्ट-ब्धता। नन्दिनीप्रदानेनात्मरक्षार्थं दिलीपं प्रति सिंहस्योपदेशः। तत्प्रत्याख्यानवर्णनम्, आत्मविनिमयेन नन्दिनीमुद्धर्त्तुकामं दिलीपं प्रति नन्दिन्याः प्रसन्नता। नृपतेः पुत्रवरप्राप्तिः। सिंहस्यान्तर्द्धानम्, नृपमस्तके स्वर्गतः पुष्टवृष्टिः। नन्दिनीं प्रति प्रार्थना। नन्दिन्या सह राज्ञः पुनराश्रमप्रत्यावर्त्तनम्। गुरोः पत्न्याश्च समीपे राज्ञः नन्दिनीप्रसन्नतावर्णनम्। वशिष्ठाज्ञया तस्य नन्दिनीदुग्धपानम्। अयोध्यां प्रति प्रस्थानम्। सुदक्षिणाया गर्भधारणञ्च।

तृतीयसर्गे—सुदक्षिणाया दोहृदलक्षणवर्णनम्। तस्याः गर्भदर्शने राज्ञो मनस्तुष्टिः। पुंसवनादिक्रियानुष्ठाने विविधगर्भ-

पोषणसामग्रीप्रदाने च राज्ञश्चेष्टावर्णनम्। राज्ञः पुत्रोत्पत्तिः। तेन राज्ञः धनरत्नादिवितरणम्। राज्ञः पुत्रमुखदर्शनम्। पुत्रस्य 'रघुः' इति नामकरणम्। ततः उपनयनसंस्कारवर्णनम्। विद्याशिक्षा। रघोर्विवाहः। एकोनशतमखस्य राज्ञः पुनरश्वमेधोद्यमः। अश्वरक्षणे रघोर्नियोगः अश्वचोरेण पुरन्दरेण सह रघोः युद्धम्। रघुं प्रति इन्द्रस्य प्रसन्नता। अप्रत्यर्पणेनापि अश्वस्य इन्द्राज्ञया शताश्वमेधसमाप्तिवर्णनम्। रघोरभिषेकः। दिलीपस्य वाणप्रस्थावलम्बनञ्च।

चतुर्थसर्गे—रघोः प्रजापालनवर्णनम्। शरदवसाने राज्ञो दिग्विजयोद्योगः। युद्धयात्रा। रघोर्यात्राकाले लाजवर्षणादिविविधशुभानुष्ठानम्। सेनासन्निवेशः। हिमवतः समुद्रोपकण्ठं यावत् समन्तात् सुह्मवङ्गकलम-उत्कलकलिङ्गपाण्ड्यताम्रपर्णीपारसीकयवनहूणकाम्बोजप्राग्ज्योतिषकिरातादिजनपदजयवर्णनम्। सर्वस्वदक्षिणविश्वजिद्यज्ञानुष्ठानम्। यज्ञावशाने सचिवानुमोदनेन रघोः पुरप्रवेशः।

पञ्चमसर्गे—विश्वजिद्यज्ञे निःशेषविश्राणितकोषजातस्य राज्ञः समीपे लब्धविद्यस्य गुरुदक्षिणार्थिनः कौत्सस्यागमनम्। वरतन्तुशिष्यस्य कौत्सस्य पूजादिनातिथिसत्कारः। मुनेः कुशलजिज्ञासा। राज्ञः प्रशंसापूर्वककुशलविज्ञप्तिः। गुरुदक्षिणाधनपरिमाणकथनम्। शरीरमात्रस्थितस्य नृपतेस्तादृग्धनदानाभावचिन्तनम्। वशिष्ठमन्त्रप्रभावेण भीतकुवेरस्य विनापि युद्धं तद्रथे धनवृष्टिः। कौत्साय तत्समस्तदाने रघोरादेशः। कौत्सस्य गुरुदक्षिणां विना धनग्रहणे अनिच्छा। उष्ट्रवाहितयानेन तद्धनस्य

मुनेराश्रमे प्रेरणम्। पुत्रवरप्रदानानन्तरं कौत्सस्य आश्रमं प्रति गमनम्। रघुपत्नीगर्भधारणम्। रघोरनुरूपपुत्रप्राप्तिः। 'अजः' इति तस्य नामकरणम्। विदर्भराजदुहितुरिन्दुमत्याः स्वयंवर-वर्णनम्। ससैन्यस्य अजस्य स्वयंवरसभागमने उद्योगः। पथि करिरूपधारिणा गन्धर्वतनयेन प्रियंवदेन सह अजस्य युद्धम्। अजस्य प्रियंवदतः सम्मोहननामकाजेयास्त्रप्राप्तिः। भोजराज-धान्यां कदाचिन्निद्रागतस्य अजस्य सूतमागधकृतस्तोत्रवर्णनम्। वन्दिकृतस्तोत्रेण व्यपगतनिद्रस्य अजस्य स्वयंवरसभागमनञ्च।

षष्ठसर्गे—सभागतस्य अजस्य शोभावर्णनम्। अजस्य विक्रम-दर्शने सभासदामन्येषामवनीपालानामवस्था। स्वयंवरसभाया-मिन्दुमत्या आगमनवर्णनम्। सुनन्दया कार्त्तवीर्य्यप्रमुखाणां राजकुमाराणाम् 'इमं वरय' इत्यादिकोपदेशप्रदानम्। अति-क्रान्तनिखिलावनीपालाया इन्दुमत्याः अजगले वरमाल्यदानम्। नवदम्पत्योस्तात्कालिकशोभावर्णनम्।

सप्तमसर्गे—भोजराजाङ्गजसमभिव्याहारेण अजस्य इन्दुमत्या सह भोजपुरप्रवेशनम्। इन्दुमतीमलभमानानामन्येषां हतोद्यमानां राजकुमाराणां स्वशिविरगमनम्। अजस्य इन्दुमत्याः पाणिग्रहणम्, गृहीतानुमतेरिन्दुमत्या सह अजस्य अयोध्यां प्रति प्रस्थानम्। इन्दु-मत्याः स्वयंवरे विमुखैर्महीपतिभिः सह अजस्य युद्धम्। गन्धर्व-दत्तसम्मोहनास्त्रेण नरपतीनां पराजयः। अजविजयश्रवणेन रघोरानन्दप्रकाशः। अजस्याभिषेकः। रघोर्गृहस्थाश्रमपरित्यागो-द्योगश्च।

अष्टमसर्गे—निखिलपितृगुणविभूषितस्य अजस्य राज्यपालनवर्णनम्। रघोर्वनगमनोद्योगः। अजप्रार्थनेन तस्य ग्रामोपकण्ठे वासः। रघोः स्वर्गारोहणम्। अजस्य पित्रर्थे शोकः। सचिवानामुपदेशप्रदानम्। नगरोपकण्ठे इन्दुमत्या सह अजस्य विहारः। इन्दुमत्याः पुत्रप्राप्तिः, 'दशरथः' इति तस्य नामकरणम्। अन्तरीक्षतो देवर्षेर्नारदहस्तात् मालापतनम्। तद्दर्शने इन्दुमत्याः मृत्युः। राज्ञो विलापः। वशिष्ठस्य शिष्यमुखे सान्त्वनाप्रदानप्रसङ्गेन तृणविन्दुशापविवरणवर्णनम्। इन्दुमत्याः प्रतिकृतिस्थापनेन राज्ञः शोकापनोदनम्। दशरथस्य राज्याभिषेकः। अजस्य प्रायोपवेशनावलम्बनम्। तस्य स्वर्गप्राप्तिः।

नवमसर्गे—दशरथस्य राज्यरक्षणम्। दिग्विजयः। अश्वमेधानुष्ठानम्। वनविहारवर्णनम्। वसन्तवर्णनम्। मृगयावर्णनम्। मृगयामाचरतो दशरथस्य तमसातीरगमनम्, तमसातीरे तस्य शब्दभेदिबाणनिक्षेपः। तेन सह क्रन्दनशब्दश्रवणम्। तदनुसरतो दशरथस्य मुनिपुत्रदर्शनलाभः। तस्य परिचयजिज्ञासा। प्राप्तपरिचयस्य दशरथस्य तत्समभिव्याहारे तदीयपित्रोः समीपागमनम्। स्वकीयाज्ञानकृतकर्मविज्ञप्तिः। दशरथं प्रति मुनेः पुत्रशोकप्राप्तिरूपशापप्रदानम्। तयोरन्धदम्पत्योरन्त्येष्टिक्रियानुष्ठानम्। राजधान्यां प्रत्यावर्त्तनञ्च।

दशमसर्गे—किञ्चिदूनायुतवत्सरराज्यपालनानन्तरम् ऋष्यशृङ्गेण दशरथस्य पुत्रेष्टियागकरणम्। अत्रान्तरे रावणोद्वेजितानां देवानां विष्णोः समीपागमनम्। विष्णुस्तुतिः। देवान् प्रति

विष्णोः प्रसन्नतावर्णनम्। राक्षसविनाशाय दशरथपुत्ररूपेण विष्णोरवताराङ्गीकारः। दशरथस्य पुत्रेष्टियागसमापनान्ते चरुकरस्य दिव्यपुरुषस्याविर्भावः। कौशल्याकैकेयीभ्यां यज्ञीयचरुप्रदानम्। ताभ्यां पुनः सुमित्रायै स्वस्वचरोरंशप्रदानम्। चरुभक्षणेन तासां गर्भसञ्चारः। महिषीणां स्वप्नदर्शनम्। राज्ञः समीपे स्वप्नवृत्तान्तकथनम्। कौशल्यातः रामरूपेण कैकयीतो भरतरूपेण सुमित्रायाः लक्ष्मणशत्रुघ्नाविति द्वैतरूपेण विष्णोराविर्भावः। तेषामाविर्भावे राज्यस्य शुभलक्षणवर्णनम्।

एकादशसर्गे—यज्ञरक्षार्थं विश्वामित्रेण दशरथसमीपे रामस्य यज्ञभूमिगमनप्रार्थना। गमनसमये विश्वामित्रात् रामलक्ष्मणयोः तारकावधः। रामलक्ष्मणयोर्मुनीनां यज्ञशालागमनम्। रामास्त्राघातेन राक्षसवधः। विश्वामित्रेण सह रामलक्ष्मणयोर्मिथिलायज्ञभूमिगमनम्। पथि अहल्याया मुक्तिः। हरधनुर्भङ्गः। दशरथस्य विदेहराजधान्यागमनम्। सीतोर्मिलाकृशोदरीश्रुतिकीर्त्तिभिः सह यथाक्रमं रामलक्ष्मणभरतशत्रुघ्नानां परिणयः। पुत्रैः पुत्रवधूभिश्च सह दशरथस्य अयोध्याप्रत्यावर्त्तनसमये पथि जामदग्न्यसंरम्भः। जामदग्न्यपराभवः। दशरथस्य अयोध्यापुरप्रवेशनञ्च।

द्वादशसर्गे—दशरथस्य रामाभिषेकाभिलाषः। कैकय्या दशरथसमीपे पूर्वप्रार्थितवरद्वयप्रार्थनम्। रामनिर्वासनम्। दशरथस्य मृत्युः। नन्दिग्रामतः भरतस्यानयनम्। भरतविलापः। रामानयनार्थं भरतस्य चित्रकूटयात्रा। रामादेशेन भरतस्य राज्यपा-

लनम्। रामेण विराधबधः। अगस्त्यादेशेन रामस्य पञ्चवटीगमनम्। तत्र शूर्पणखाया नासाकर्णच्छेदनम्। स्वर्णमृगरूपधारिमारीचसहायेन रावणेन सीताहरणम्। सीतान्वेषणम्। जटायुषा सह रामस्य साक्षात्कारः। ततः सीतासंवादप्राप्तिः। जटायुषः अन्त्येष्टिः। कबन्धोपदेशेन सुग्रीवेण सह रामस्य सौख्यम्। बालिबधः। हनूमता सीतान्वेषणम्। हनूमतो लङ्कापुरीदर्शनम्। अक्षयराक्षसबधः। सीतायै रामस्याभिज्ञानप्रदानम्। विभीषणस्य रामपक्षावलम्बनम्। सागरवेलायां रामस्य सेनासन्निवेशः। सेतुबन्धनम्। रावणेन सह रामस्य युद्धारम्भः। राक्षसमायाकल्पितराममस्तकदर्शने सीताविलापः। त्रिजटया तस्याः सान्त्वना। रामादीनां नागपाशबन्धनम्। गरुड़ागमनेन तन्मुक्तिः। लक्ष्मणस्य शक्तिशेलम्। हनूमदानीतया सञ्जीवन्या पुनः रामादीनां जीवनप्राप्तिः। कुम्भकर्णबधः। रावणबधः। सीताया अग्निपरीक्षा। राक्षसराजेऽ विभीषणस्याभिषेकः। सीताहनूमत्सुग्रीवविभीषणैः सह रामस्य अयोध्यायां प्रत्यावर्त्तनञ्च।

त्रयोदशसर्गे—विमानारोहणेन प्रयातस्य रामस्य सीतासमीपे समुद्रविभूतिकीर्त्तनम्। राममित्रस्य गुहस्य आवासदर्शनम्। सुमन्त्रविलापः। सरयूदर्शनम्। वशिष्ठप्रमुखेण सह भरतेन रामादीनां प्रत्युद्गमनम्। भरतेन सुग्रीवादीनामभिनन्दनम्। भरतेन रामसीतयोश्चरणवन्दना। मन्दीभूतजवेन पुष्पकेण रामादीनामयोध्योपवनगमनञ्च।

चतुर्दशसर्गे--ससीतयो रामलक्ष्मणयो र्मातृसमीपे गमनम्।

कौशल्यादीनामाशीर्वादप्रयोगः। सीतायाः खेदोक्तिः। श्वश्रूभिस्तस्याः परिसान्त्वनम्। रामाभिषेकः। विभीषणादीनामातिथ्यवर्णनम्। सीतायाः स्वहस्तविनिर्मितपुरष्कारदानेन सुग्रीवादीनां स्वदेशानुगमनानुमोदनम्। रामस्य प्रजापालनम्। सीताया गर्भोत्पत्तिः। गर्भपरिपुष्टिकामेन रामेण सीतायाः स्पृहणीयजिज्ञासा। सीतायाः पुनस्तपोवनदर्शनाभिलाषविज्ञप्तिः। इत्यवसरे रावणचोरितायाः सीतायाः समन्ततो निन्दाप्रचारः। तपोवनदर्शनव्याजेन वाल्मीकेराश्रमे सीताया निर्वासनम्। सीताया वाल्मीकेराश्रमागमनम्। वाल्मीकेरुपदेशेन सीताया आश्रमोचिताचारावलम्बनम्। रामेण सीतायाः प्रतिकृतिनिर्माणम्। अश्वमेधानुष्ठानञ्च।

पञ्चदशसर्गे—रामस्य समीपे लवणपीडितानां तपस्विनां समागमः। रामादेशेन लवणवधार्थं शत्रुघ्नस्य अभियानम्। युद्धयात्राप्रसङ्गे शत्रुघ्नस्य वाल्मीकेराश्रमगमनम्। सीतायाः पुत्रजन्म। लवणवधः। मधुपुरे लक्ष्मणस्य राज्यस्थापनम्। वाल्मीकिना सीतापुत्रयोः 'लवः कुशश्च' इति नामकरणम्। लवकुशयोः रामायणगानशिक्षा। शत्रुघ्नस्य रामसमीपे गमनम्। रामप्रश्ने शत्रुघ्नस्य वाल्मीकेरादेशेन सीतायास्तनयजन्मगोपनम्। मृतपुत्रस्य कस्यचिद् विप्रस्य रामसमीपागमनम्। तत्तनयस्याकाले मृत्योः कारणानुसन्धानार्थं रामस्यारण्यगमनम्। तत्र शूद्रकतपस्विदर्शनम्, तस्य शिरश्छेदः मुक्तिश्च। ब्राह्मणकुमारस्य जीवनप्राप्तिः। अश्वमेधार्थं यज्ञीयाश्वमोचनम्। यज्ञे निमन्त्रितानां मुनिमहर्षीणां

यज्ञसभायां लवकुशाभ्यां रामायणगानम्। रामप्रदत्तपारितो-षिकग्रहणे कुशलवयोरनिच्छा। सीतानयने वाल्मीकेः समीपे रामस्याङ्गीकारः। सपुत्रसीताया रामसमीपागमनम्। पुनर-ग्निपरीक्षार्थं सीतां प्रति रामस्य निर्देशः। सीताया वसुन्धरा-गर्भाश्रयणम्। युधाजितादेशेन भरताय सिन्धुदेशप्रदानम्। भरतपुत्रयोस्तक्षकपुष्कलयोः तक्षकपुष्कलस्याधिपत्यग्रहणम्। लक्ष्मणतनययोरङ्गदचन्द्रकेत्वोः कारापथाधिपत्यनिर्वाचनम्। मुनिवेशधारिणः कृतान्तस्य रामसमीपागमनम्। निषिद्धेऽपि गृहे दुर्वाससः प्रवेशनम्। लक्ष्मणस्य स्वर्गारोहणम्। कुशलवयोः कुशस्थलीश्रावस्त्योः प्रतिष्ठा। अनुजैः सह रामस्य उत्तरपथ-प्रस्थानम्। अयोध्यावासिनां रामानुगमनम्। रामस्य स्वमूर्तौ प्रवेशश्च।

षोड़शसर्गे—रामनिर्वाणानन्तरं कुशलवयो राज्यपालनम्। रात्रौ स्वप्नयोगे कुशस्य दिव्यनारीदर्शनम्। तस्याः समीपे हीन-प्रभस्य अयोध्यापुरस्य विविधामङ्गलश्रवणम्। वेदविद्ब्राह्मण-समीपे राज्ञः स्वप्नवृत्तान्तज्ञापनम्। ब्राह्मणानामुपदेशेन कुशस्य पुनरयोध्यागमनम्। सौधादीनां संस्कारेण पुनरयोध्यायाः संस्कारसाधनम्। देवालये विविधबलिप्रदानम्। कुशलवयो-र्गमनेन अयोध्याया विविधसमृद्धिसाधनम्। जलकेलिसमये अग-स्त्यप्रदत्तरत्नालङ्कारदर्शनम्। धीवरेण रत्नान्वेषणम्। अप्राप्तरत्नस्य नृपतेर्गरुड़ास्त्रग्रहणम्। कुशास्त्रभीतेन कुमुदनागेन भगिन्या सह तस्मै आभरणप्रदानञ्च।

सप्तदशसर्गे—कुशमहिष्याः कुमुद्वत्या गर्भे अतिथेर्जन्म । कुश-नृपस्य पञ्चत्वप्राप्तिः । कुमुद्वत्याः पत्युरनुगमनम् । सचिवैरतिथे राज्याभिषेचनम् । बालनृपतेरतिथेराज्यपालनम् । अतिथेरश्व-मेधानुष्ठानञ्च ।

अष्टादशसर्गे—अतिथेरनन्तरं निषधतोऽग्निवर्णपर्यन्तं रघुवंशीयानां ये राजानो राज्यपालयन्तः संक्षेपेण तेषां चरित्रवर्णनम् ।

ऊनविंशसर्गे—विलासिनः अग्निवर्णस्य राज्यपालनम् । तस्य व्यसनासक्तिवर्णनप्रसङ्गेन विविधरतिवर्णनम् । राज्ञः क्षयरोगः तेन पञ्चत्वप्राप्तिः । अग्निवर्णस्य महिष्या राज्यप्राप्तिश्च ।

**नायकादिसिद्धान्तः**—अत्र दिलीपप्रभृतयो नायकाः धीरोदात्ताः नायिकाश्च, सुदक्षिणादिकाः स्वकीयाः मुग्धालम्बन-विभावौ, अन्योऽन्यचक्षुरादिक्रिया अनुभावाः निर्वेदादयो व्यभिचारिणः, परस्परोच्चरितवाक्यानि उद्दीपनविभावाः, रतिः स्थायी, वीर-शृङ्गार-करुण-शान्तादयो रसाश्चाङ्गानि ; रीतिः वैदर्भी, गुणोमाधुर्याख्यः, इदञ्च रामायण-भारतादिरूपाम् इतिहासकथामाश्रित्य प्रणीतम् । दर्शिता श्चात्रपरमानन्दैकफला धर्म्मार्थकाममोक्षरूपाः चत्वारः वर्गाः इति ।

---

## कुमारसम्भवसमालोचनम्—

एतत् खलु कुमारसम्भवं नाम काव्यं शैवाभिधमहापुराणस्य प्रथमखण्डीयनवमाध्यायत ऊनविंशाध्यायपर्य्यन्तं प्रतिपाद्य-तारकासुरवधमाश्रित्य श्रीमता कालिदासेन निर्म्मितम्। एष ग्रन्थः कालिदासस्य प्रथमे वयसि रचित आसीदिति प्रमाणेना-वतारितं प्रमाणकुशलैः। अत्र यत् पार्वतीतपस्यानन्तरं पार्वतीं प्रति प्रसन्नेन हरेण स्वयम्बरविधानकर्त्तव्यतया उपदेशः, सप्तर्षिमण्डलस्य च तत्प्रार्थनार्थं हिमवन्तं प्रति प्रेषणं, तत् सर्वं कविकल्पितं न तु पुराणान्तर्गतमिति। अस्मिंश्च यत् भूधरराजपार्वतीमेनाकवसन्तरतिविलापसमाधिवर्णनादि विद्यते, तदतीव हृद्यम्। तथाहि—

'अमुनैव कषायितस्तनी सुभगेन प्रियगात्रभस्मना।
नवपल्लवसंस्तरे यथा रचयिष्यामि तनुं विभावसौ॥'

अपिच—'शशिना सह याति कौमुदी सह मेघेन तड़ित् प्रलीयते।
प्रमदाः पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि॥'

इत्याद्यैः श्लोकैः कविना यत् काव्यस्याङ्गं व्यरचि, तदतीव सहृदयहृदयेषु प्रमोदमभिवर्षति आकर्षति च काव्यमधीयानानां मनांसि अतिमात्रम्। किञ्च—

'पर्य्याप्तपुष्पस्तवकस्तनाभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः।
लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि।"

इत्यादि वर्णनापरिपाट्यमलङ्कारमलंकृतं वचः विना कालिदास-

सुभाषितेन सम्भवतितरामन्यत्र केषामपि कविवाक्येषु कदापि। अत्र तावदस्ति काव्यनिर्म्माणविषयिणी सुमहती विप्रतिपत्तिः विदुषां, केऽपि मन्यन्ते सप्तदशसर्गावधि तारकासुरवधपर्य्यन्तमेव कालिदासेन प्रणीतम्। अपरे अष्टमसर्गपर्य्यन्तमेव निर्म्मितमिति। एतत् किल पक्षद्वये उत्तरपक्ष एव ज्यायानिति मामकानां हृदयम्। यतः काव्यजलधेरुत्तुङ्गमहोर्म्मिसंक्षोभितभीतमानसानां दृढ़-वर्म्म वहित्रमिव व्याख्यातृपुङ्गवेन तत्रभवता मल्लिनाथसूरिणाष्टम-सर्गपर्य्यन्तमेव व्याख्यातम्। अपिच, कौमुद्यां भट्टोजीदीक्षितेन—

'सार्वरस्य तमसो निषिद्धये नूनमुन्नमति यज्वनां पतिः।
पुण्डरीकमुखि पूर्वदिङ्मुखं कैतकैरिव रजोभिराहतम्॥'

इति कालिदासकृतित्वेन प्रकटितम्। उणादिवृत्तावुज्ज्वलदत्तेन तु 'रवः प्रगल्भो हतभेरिसम्भवः' इति कुमारसंभव इति परभागावस्थितेन कुमारसंभव इति व्यवहृतम्, नतु कालिदास इति। एवमपि नवमसर्गप्रभृति काव्यं न प्रथमांशवत् प्रशस्त-तमं कालिदासान्न्यूनेनैव केनापि कविना निर्म्मितमिति शैली-विचारेण सुकरमवगन्तुम्। यथाहि पञ्चदशसर्गे—

'संग्रामं प्रलयाय सन्निपततो वेलामतिक्रामतो
वृन्दारासुरसैन्यसागर-युगस्याशेषदिग्व्यापिनः।
कालातिथ्यभुजो बभूव बहलः कोलाहलः कोमलः
शैलोत्तालतटीविघट्टनपटुर्ब्रह्माण्डकुक्षिम्भरिः॥'

इत्याद्यनेके निरसाः श्लोकाः वर्त्तन्ते तत्रांशे, नितरां प्रागुक्तसिद्धान्तितं मतं नाम्रेडयं प्रस्तावताम्। अनेन कुमार-

सम्भवेन ब्रह्मपुराणशिवपुराणयोः समं विषयस्य तथानेकशः श्लोकस्य च साम्यात् केऽपि मन्यन्ते विद्वांसः* कालवशेन पुराणद्वये विनाशमुपगते कालिदासादधस्तनेन केनापि कविना कुमारसम्भवादाकृष्य तत्तदंशजातं वेदव्यासनाम्ना प्रक्षिप्तमिति। तत्तावतामंशानां सूक्ष्मासूक्ष्मविचारणं समयसापेक्षं बाहुल्यमयञ्च समीक्ष्य प्रोज्झिताः क्षुद्रतमेऽस्मिन् प्रबन्धे, आशास्महे यदत्र उद्धृतम्, तेनैव यथाकथञ्चित् परिज्ञानमेष्यति सभ्यानाम्। तथाहि कालिदासः कुमारसम्भवे :—

'प्रसन्नदिक्पांशुविविक्तवातं शङ्खस्वनानन्तरपुष्पवृष्टिः।
शरीरिणां स्थावरजङ्गमानां सुखाय तज्जन्मदिनं बभूव ॥'

शिवपुराणे :—

'दिशः प्रसेदुः पवनः सुखं ववौ
शङ्खं निदध्मुर्गगणेचरास्तथा।
पपात मौलौ कुसुमाञ्जलिस्तदा
बभूव तज्जन्मदिनं सुखप्रदम् ॥'

कुमारे :—

'तां पार्व्वतीत्याभिजनेन नाम्ना
बन्धुप्रियां बन्धुजनो जुहाव।
उमेति माता तपसो निषिद्धा
पश्चादुमाख्यां सुमुखी जगाम ॥'

---

* Vide History of ancient literature by the venerable Professor F. Maxmuller, K. M.

शिवपुराणे :—

‘तां पार्व्वतीत्याभिजनाच्च नामतो
जुहाव तद्बन्धुजनः स्वभावतः ।
माता निषिद्धा तपसे यदा तु सा
ययावुमाख्यां भवभक्तिभाविनी ।

इत्यादि ; पुष्कलमत्र वयमुदासीनाः पुरातत्वविशेषज्ञा एव प्रमाणम् ।

मन्यामहे कवेरपरिपक्वलेखनसमये रचितमेवेदं काव्यम् । तेनादर्शीकृतस्य पुराणद्वयस्य बहुलांश एवात्र पतितः, अथवा विषयसाम्यात् एकस्य श्लोकोऽपरस्मिन् शिष्यपरम्परया उन्नीत आसीदिति किं बाहुल्येन ।

**अस्य सर्गसंक्षेपः**—प्रथमसर्गे—हिमालयवर्णनम्, दाक्षायणी-शरीरत्यागेन पार्व्वत्याः जन्मग्रहणम्, शिवस्य हिमालयसानौ तपश्चर्यावर्णनम्, पितुरुपदेशात् पार्व्वत्यास्तपश्चरणम् ।

द्वितीये—ब्रह्मणस्तुतिः, तारकासुरवधप्रार्थनम्, शिवपुत्रस्यो-त्पत्त्या तारकवध इति ब्रह्मणा उपदिष्टे तदर्थं कन्दर्पस्मरणम् ।

तृतीये—शिवस्य ध्यानभङ्गार्थं मदनप्रेषणम्, रतिवसन्ताभ्यां सह मदनस्य शिवाश्रमे गमनम्, वसन्तवर्णनम्, शिवेन स्मरभ-स्मीकरणम् ।

चतुर्थे—रतिविलापः, मरणार्थं रत्या वसन्तं प्रति चितायाः प्रार्थनम्, अशरीरीवाण्या रत्याः समाश्वासनम् ।

पञ्चमे—पार्वत्या पित्राज्ञया सखीभ्यां सह तपस्यार्थं गौरी-शिखरगमनम्, तपस्तुष्टेन शिवेन ब्रह्मचारिवेशेन पार्व्वतीं प्रति तपश्चरणप्रयोजनस्य प्रश्ने पार्वत्या सखीमुखेन तदुत्तरदाने ब्रह्मचारिणा महेशस्यानुपादेयतायाः प्रतिदानम्, तेन क्रुद्धायाः पार्व्वत्याः तमुपालभ्य स्थानान्तरगमनोद्योगः, तेन प्रसन्नेन हरेण निजरूपालम्बनेन पार्वत्याः हस्तग्रहणम्, हरं प्रति पार्वत्या स्वदानाय पितुः प्रार्थनाया उपदेशः।

षष्ठे—सप्तर्षीणां हरेण स्मरणम्, पार्वतीप्रार्थनार्थं तेषां हिमवति प्रेषणम्, त्रिदिनोत्तरं पार्वतीविवाहस्य दिनस्थिर-करणम्, सप्तर्षीणां स्वस्थानगमनम्।

सप्तमे—हरपार्वत्योर्वैवाहिकनेपथ्यादिरचना, वरयात्रिका-णामोषधिप्रस्थे गमनम्, विवाहक्रियासमाधानम्, देवप्रार्थनया स्मरं प्रति हरस्य प्रसादः, पार्वत्या सह हरस्य कौतुकागारे गमनम्, इयन्तः समासतः एव वर्त्तन्ते विषयाः। अष्टमसर्गा-दीनां विषयाः बाहुल्यभयादुज्झिताः इति।

**नायकादिसिद्धान्तः**—अस्य तावन्नायकः षड़ाणनः, ताड़कासुरस्तु प्रतिनायकः। परस्परधनुराकर्षणादयोऽनुभावाः, धृत्यादयो व्यभिचारिभावाः, उत्साहस्थायी, वीररस एवाङ्गी, करुणादयोऽन्ये रसाः यथासम्भवमङ्गानि। रीतिः पाञ्चाली, गुणो माधुर्य्याख्यः।

---

## किरातार्जुनीयसमालोचनम्—

किरातार्ज्जुनीयं नाम काव्यं तत्रभवतः कविकुलतिलकस्य श्रीमतो भारविनाम्नो महाकवेः सुधावर्षिलेखनीप्रसूतमतिप्राचीनं महाकाव्यम्। एष ग्रन्थः श्रीमन्महाभारतस्य वनपर्वतः कुरुराज-दुर्य्योधननिर्जितानां द्वैतवनमधिवसतां युधिष्ठिरप्रमुखपाण्डवानां तात्कालिकवृत्तान्तविशेषमवलम्ब्य विरचितः। अत्र च तेषामन्यतमस्यामोघवीर्य्यशालिनोऽर्ज्जुनस्य परिगृहीतकिरात-वेशात् पशुपतेरस्त्रलाभो विशेष इति। कविकुलवरेण्येन भारविणा किरातार्ज्जुनीयमिति नाम्ना ग्रन्थोऽयं प्रथमं पर्य्यचायि। परतश्चास्य कविसंज्ञया भारविरित्यापरमभिधानं प्रचरितम्। महाकाव्यलक्षणे च 'कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा' इत्युक्तेः कविनामानुसारेणापि महा-काव्यस्य नामकरणं नासङ्गतमेव। तथाहि शिशुपालवधं नाम महाकाव्यं 'माघः' इति कविनाम्ना, रावणवधकाव्यञ्च 'भट्टिः' इति कविनाम्ना प्रख्यातमवलोक्यते।

स खलु महात्मा भारविर्भारतभूमेः क्वचन प्रदेशे पत्तने वा जननमभिलभ्य कमन्वयमलमकरोदिति ज्ञातुं सर्वथैव कौतुकं वर्त्तते सहृदयानां, किन्तु तन्निर्वचनमतीव दुःशकम्। हिमवतोऽ-त्यधिकवर्णनदर्शनात् अधुनातनस्य 'सिकिम' इत्यभिधेयजन-पदस्य उत्तरदिगुपान्तेःयत्र इन्द्रकीलनामको हिमवदंशविशेषः

आस्ते, यं सव्यसाचिनस्तपःस्थानतया कविः सविशेषं वर्णितवान्, तस्योपत्यकायामधित्यकायाञ्च शबरजातीया निवसन्ति—ये हि किरातवेशा पार्वतीपतेः सैन्यापत्यं परिगृह्य सहार्जुनेन युयुधुः। एतत्सर्वमन्यदपि हिमवदश्वैर्य्यं कविर्यादृशं वर्णितवान्, तत्पाठेन स्वत एव चेतसि उदेति, यदपरिचितस्थान-महिम्ना दूरस्थेन केनापि तादृशं वर्णितुं न शक्यते। सुत-रामेवामनयन्ति कतिशः कृतिनः तत्प्रदेश एवास्य कवेरावासभूमि-रिति। जनश्रुतिरपि तेषामेव मतं समर्थयते। यथा अनुश्रुयते तावत्—अध्ययनकाले गुरुकुलं निवसतो गोचारणप्रसङ्गेन हिमवदुपात्यकाधित्यकादिदेशं पर्य्यटतस्तद्विभूतिपर्य्यवेक्षणेन कवेर्मनसि कवित्वप्रतिभा समजनि, ततोऽसौ भारतेतिहासमा-श्रित्य प्रतिदिनमेकैकं पद्यं निर्म्माय भूर्ज्जपत्रे योजयामास। ततश्च तदेव गच्छता कालेन एकीकृत्य किरातार्ज्जुनीयमिति नाम्ना प्रख्यापितवान्। एतत् वितथमवितथं वा तत् निर्णेतुं नाद्यापि शक्नुवन्ति सभ्याः। अपरमस्ति कविसम्बन्धिनी सूक्तिः कस्यचित्।

"तावद्भा भारवेर्भाति यावन्माघस्य नोदयः।
उदिते नैषधे काव्ये क्व माघः क्व च भारविः॥"

इति श्लोकं पर्य्यालोचयन्तः केऽपि भारविमाघयोः समकाल-माविर्भावमुद्भावयन्ति, तन्न समीचीनं मन्यते यतो दृश्यते, षट्पञ्चा-शदधिकपञ्चशतशकसंवत्सरे राज्ञा पुलिनकेशरिणा माघकवये प्रदत्तताम्रशासने कालिदासेन समं भारवेर्नामोल्लेखकृत इति।

ततोत्कलितोऽयं श्लोकः—

"येनायोजि नवेश्म स्थिरमर्थविधौ विवेकिना जिनवेश्म।
स विजयतां रविकीर्त्तिः कविताश्रितकालिदासभारविकीर्त्तिः।"

अनेन ताम्रशासनानुप्रमाणेनानुमीयते, यदेष भारविनामा कविश्चतुर्द्दशशतादपि वर्षात् पूर्वमाविरासीदिति सुतरां तस्यै वानुक्तं माघकवितेति कुतः सन्देहावसरस्तत्र। शिशुपालबधपर्य्यालोचनावसरे तत् सर्व्वमुपपादितं, नेहोक्तं विस्तरभयादिति। अस्य च महाकवेर्विरचनचातुर्य्यदर्शनेनास्माद्दृशां चेतसि प्रतिभासते, किरातार्ज्जुनीयं नाम महाकाव्यं कालिदासकृतकतिपयसाहित्यमन्तरेणाधुनातनास्मद्देशप्रचलितानां काव्यानां मूर्द्धनि वर्त्तत इति। इह तावत् कर्त्तव्यनिर्णयकाष्ठामधिगच्छत् द्रौपदीभीमयुधिष्ठिराणामन्योऽन्यमुक्तिप्रत्युक्तिव्याजेन राजनीतेरत्यधिकमुत्कर्षं दर्शितवान् स खलु कविकुलतिलको भारविः। तथा इन्द्राज्र्जुनसंवादेऽप्यतिमहतीं नीतिं पार्थस्यालोकसामान्यबलवीर्य्यवर्णनया महत्यात्मशक्तिञ्चोद्घाटयामास। चरचारित्रं राजनीतिः, सहोदरं प्रति सहृदयता, पाण्डवान् प्रति सुप्रसन्नस्य व्यासस्य सहसा समागमः, अर्ज्जुनं प्रति पाशुपतास्त्रलाभार्थमुपदेशः, देशान्तरं यियासुना स्वामिना सह पतिव्रताया व्यवहारः, शरत्समृद्धिः, हिमवद्विभूतिः गभीरवागविस्तरेण कविनातिमधुरपदविन्यासेन वर्णितम्। असावर्थगुर्व्वी तरलमतीनां धीपरिणमननिपुणा वाणी विद्वज्जनमनसि समधिकतरमानन्दमुत्पादयत्येव। अत एव बहिः कठोरान्तर्म्मधुराणां भावार्थस-

मूहानां समावेशचातुर्य्येणापि माहात्म्यमस्याननग्रसाधारणम् । उक्तञ्च तत्रभवता सूरिसत्तमेन टीकाकृता मल्लिनाथेन—

"नारिकेलफलसम्मितं वचो भारवेः सपदि यद्विभज्यते ।
स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम् ॥"

इति कल्पतरोरिवास्य भारविप्रबन्धस्य मधुरफलमास्वाद्य के न खलु विमुग्धाः अत्र जगति ? काव्यशास्त्रपर्य्यालोचयद्भिरमुष्माद-लङ्कारलक्षणोक्तं तावत् काव्यपाठफलमत्यधिकानन्दश्च प्राप्यत इति कृतं बाहुल्येन ।

**अस्य संक्षिप्तेतिवृत्तम्**—प्रथमसर्गे—द्वैतवने युधिष्ठिर-सविधे दौत्यनियुक्तस्य वनेचरस्य समागमः, वनेचरेण दुर्य्योधनस्य राजनीतिनैपुण्यवर्णनम्, गृहीतपारितोषिकस्य तस्य प्रस्थानम्, युधिष्ठिरं प्रति द्रौपद्या ओजस्विनी रणोद्दीपिनी वाणी च ।

द्वितीये—भीमस्य ऊर्ज्जस्वलं समरपक्षपातिवाक्यम्, युधि-ष्ठिरस्य च शान्तिपूर्णं वचनजातम्, भगवतो व्यासस्य समागमः ।

तृतीये—व्यासस्यार्ज्जुनाय विद्यादानम्, यक्षसमागमः, द्रौप-द्या उद्दीपनोक्तिः, धनञ्जयस्य हिमालयपादविशेषमिन्द्रकीलं प्रति प्रस्थानञ्च ।

चतुर्थे—शरत्सुषमावर्णनम्, धनञ्जयस्य हिमाद्रिदर्शनञ्च ।

पञ्चमे—हिमवतो वर्णनम्, अर्जुनस्य हिमवतो मूलप्राप्तिश्च ।

षष्ठे—इन्द्रकीले सव्यसाचिनः आरोहणवर्णनम्, तस्य च तपश्चरणम्, वनेचरमुखादिन्द्रस्य अर्जुनकृततपस्याश्रवणम्, तत्तपो-भङ्गाय च सुरसुन्दरीप्रयाणम् ।

सप्तमे—गन्धर्वैः सहाप्सरसामिन्द्रकीले सविलासगमनादिकथनम्, तत्रागतानां तेषां सिविरसन्निवेशादिवर्णनञ्च ।

अष्टमे—गन्धर्वाणामप्सरसाञ्च कुसुमचयनादिविविधक्रीड़ावर्णनम् ।

नवमे—सन्ध्यावर्णनम्, चन्द्रोदयवर्णनम्, सुरतक्रीड़ावर्णनम्, प्रभातवर्णनञ्च ।

दशमे—धनञ्जयप्रलोभनायाप्सरसामनेकधा विलासाः, तस्य च तपोविघ्नार्थमप्सरसां प्रयासः, तासां चेष्टानैष्फल्यञ्च ।

एकादशे—विप्ररूपधृगिन्द्रपार्थसंवादः, पार्थायेन्द्रस्य महेशाराधनोपदेशश्च ।

द्वादशे—अर्जुनस्य महेशाराधनम्, तापसमुखात् शिवस्य तदुपलम्भस्तथा किरातवेशिनः शिवस्य शूकरशरीरधृतो मूकदानवस्य च प्रयाणम् ।

त्रयोदशे—मूकदानववधः, पार्थसमीपे शिवदूतसमागमः, तदुक्तपार्थाधिक्षेपश्च ।

चतुर्दशे—पार्थकृतकिरातपतेरधिक्षेपः, शिवार्जुनयोर्युद्धवर्णनञ्च ।

पञ्चदशे—चित्रयुद्धवर्णनम् ।

षोड़शे—किरातवेशस्य महेशस्यानन्यसाधारणसमरकौशलसन्दर्शनेनार्जुनस्य चेतसि वितर्कः, शिवेन सहार्जुनस्यास्त्रयुद्धवर्णनम् ।

सप्तदशे—शिवार्जुनसमागमः ।

अष्टादशे—अर्जुनस्य पाशुपतास्त्रलाभः, इन्द्रादिदेवानामपि भगवन्निर्देशेन वरदानपुरःसरं स्वस्वास्त्रप्रदानम्, युधिष्ठिरसमीपे अर्जुनसमागमनञ्च वर्णितम्।

**नायकादिसिद्धान्तः**—अस्य किरातार्जुनीयाख्यमहाकाव्यस्य नायकोऽर्जुनो धीरोदात्तः, प्रतिनायकश्च किरातपतिरालम्बनविभावौ, दूतमुखोच्चरितकिरातपतिवाक्यान्युद्दीपनानि, नायकप्रतिनायकयोर्धनुराकर्षणादयोऽनुभावाः, धृत्यादयो व्यभिचारिभावाः, उत्साहः स्थायी, वीरोनाम रसोऽङ्गी, शृङ्गारादयोऽङ्गरसाः, रीतिः पाञ्चाली, गुणः प्रसादाख्यः, किरातपतिप्रतिहतदूतो निसृष्टार्थ इति।

---

## दशकुमारचरितसमालोचनम्—

काव्यमेतन्नीतिरसपूर्णं गद्यमयाख्यायिकेति प्रस्तूयते काव्यरसरसिकैर्विपश्चिन्मुखैः। एतस्य तावत् रचयिता सकलालङ्कारशास्त्रपारंगतः श्रीमान् पण्डितकुलभूषणाचार्य्योदण्डी नाम कविः। स किल कं देशं कं वा कालमधिकृत्य प्रादुरासीदिति विज्ञानमतिदुःशकम्। समीच्य तस्य दण्डीति नाम न शक्यते तदेव तस्य नामिति वक्तुं, यतश्चतुर्थाश्रमवासिनं सन्यासिनमेवानेनैवोपनाम्ना विशेषयन्ति सन्तः, नितरामेषोऽपि तदाश्रमीय

इति सहृदयानां हृदयम्। परं कवेरस्य कलापरिच्छेद-छन्दोविचिति-काव्यादर्श-दशकुमारचरितादीनामालोचनया दण्डाचार्य्यमन्तरेण किमपि विशिष्टवृत्तमवगन्तुं नार्हन्ति सभ्याः। काव्यादर्शे वैदर्भीरीतेर्भूयसीप्रशंसादर्शनाद् आमनयन्ति केऽपि पुरातत्त्वज्ञाः सोऽयमपि कविर्दाक्षिणात्यप्रदेशीयविदर्भजनपदवासीति। अपरं तावत् समवगम्यते भारतीयेतिहासतः कस्यापि दण्डिनो वृत्तम्; यत् किल खृष्टपूर्वं (३२७) त्रिशताधिकसप्तविंशतिवर्षे ग्रीक्देशीयो वीरप्रधानो महामना सेकेन्दरो दिग्विजयोपक्रमेण भारतभूमिमुपगम्य नानाप्रदेशं विजित्य विजयगौरवेण कृत्स्नभूम्यधिवसतां तावतां नरनारीणां समाकर्षतिस्म चेतोऽतिमात्रम्। तत्र च क्षणि स एव सर्वगुणैकभूमिः सेकेन्दरः गुणिगणगणनायां कस्यचिद्दण्डिनाम्नः परमविद्वदरिद्रस्य यतिनो लोकातिशयितां प्रतिभामवगम्य तमाह्वयत् स्वसाक्षादर्थमत्यतियत्नेन। किन्तु तदवमन्य नागते तस्मिन् दण्डिनि स स्वयमेव तदाश्रमं गत्वा पर्णकुटीरोदरासीनं तं प्रत्यक्षीकृत्य परस्परं संलापेन सातिशयां तुष्टिमगादिति संक्षिप्तेति वृत्तम्। एतद्वृत्तोपन्यस्तः एव दण्डी ग्रन्थस्यास्य प्रणेता किं नवेति निर्णयोऽत्यन्तो दुःशकः। भवतु स यद्देशवासी किमु सन्यासी अथवा गृहस्थाश्रमवासीति कृतं तदालोचनया, तस्य काव्यमिदमधुना प्रचलितकाव्यनिबन्धेषु काव्यमार्गाननुशीलयन्तं सन्नीतिपथं सविशेषमुन्नयतीति किमूहस्यावसरस्तत्र। परं तस्य सन्दर्भपाठे स्फुटमेवैतत् प्रतिभाति यत् कवेरनन्यसुलभः कोऽप्यनिर्व्वचनीयो भावनिवहः सुगूढ़

विद्यते लेखनीगत इति। वर्त्तते तावदेतद्ग्रन्थविषयिणी कापि प्रवादवार्त्ता—'श्रुत्वा तु भुवनवृत्तान्तम्' इत्यारभ्य 'इत्याकलय्य योगानन्वतिष्ठम्' इत्यन्तमेवाचार्य्यपादानां लेखनीप्रसूतम्। पूर्वापरांशौ नापि तल्लेखनीविनिर्गताविति प्रवादवाक्यस्य वीजोद्घाटनमतीवासम्भवम्। मन्यामहे 'नह्यमूला जनश्रुतिः' इति चलितकथासमालम्बिनो वयं, कविना पूर्ण एव ग्रन्थो निर्म्मित आसीत्, परतो येन केनापि कारणेन तदंशौ विनाश-मुपगतौ। न चेदाद्यन्तचरितद्वयं कथमसम्पूर्णं स्यात्। कथं वा सप्तकुमारचरितवर्णनेनैव दशकुमारचरितमिति नाम विहितमार्य्यमिश्रैः। साभिनिवेशं पर्य्यालोचितेन भागत्रयाणां न रचनासाम्यं प्रतीयते; सुतरां पूर्वोत्तरभागनाशानन्तरं तत्शिष्यवर्गाणां येन केनापि तदंशौ निर्म्मितौ। भोगराज-समये दण्डिनामधेयः कश्चन दण्डाचारपरिग्रहपरः कश्चित् कृतिवर आसीत्। सएव वा दशकुमारचरितवर्णनमिषेण तदानीन्तनराजनीतिं लोकाचारं समाजिकनानादोष-गुणाख्यानं महत्यात्मकविवशक्तिं प्रसङ्गतो लोकानां हित-कथनञ्च विचित्ररचनाकौशलेन जगति प्रकटितवान्। याश्चात्र च्युतसंस्कृतयः परिलक्ष्यन्ते, तासु काश्चित् लिपिकरकरप्रमादजाः का अपि वा महामहीयसां कवीनां निरङ्कुशतया प्रयुक्ता इति अस्माकं हृदयम्। ये तावदात्मनि दृढ़सत्यसन्धाः करतलाम-लकवदतिदुष्कराण्यपि कार्य्याणि ते साधयितुं प्रभवन्तीति सुव्यक्तमेवास्मिन् परिलक्ष्यते। अपि च वसुरक्षितविहारभद्रयो-

रनुकूलप्रतिकूलवाक्याभ्यां महानुपदेशो धूर्त्तप्रतारणप्रकाराधिगमस्य शोभनं दर्शितं कविना। स्थूलत इयन्त एव प्रतिपाद्यविषयाः, पुनरप्यस्यातिसूक्ष्मभावेन नीतिगुणाख्यानपूर्विका पर्य्यालोचनातिबाहुल्यसापेक्षा कृच्छ्रसाध्या च, अतएवास्माभिर्गौरवभिया दिङ्मात्रं प्रदर्शितम्। आशास्महे काव्यरसरसिकानां पुरात्त्वगवेषणप्रेप्सूनाञ्च यथाकथञ्चिदपीदं प्रत्युपकारमातन्वीतेति किं बाहुल्येन।

**अस्य संक्षिप्तेतिवृत्तम्**—काव्यस्यास्य पूर्वपीठिकायां राजहंसस्य मानसारेण सह युद्धम् निर्जितस्य राजहंसस्य विन्ध्याटव्यावस्थानम्, तस्मिन्नेव राजवाहनस्य जन्म, अपरकुमाराणामधिगमः, तैः सह राजवाहनस्य दिग्विजयप्रयाणम्, ब्राह्मणोपकारार्थं तस्य रसातलप्रवेशः, तत्र क्षुत्पिपासाहरस्य मणेः प्राप्तिः, अपरेषां कुमाराणां तदन्वेषणाय दिग्विदिक्षु गमनम्, पातालगतेन राजवाहनेन सोमदत्तपुष्पोद्भवयोः समागमः, तयोरात्मचरितकीर्त्तनम्, राजवाहनस्यावन्तिसुन्दर्य्याः समागमः, इयन्तं यावत् वर्णितम्।

**अपरपीठिकायां**—प्रथमोच्छ्वासे राजवाहनस्य नियमनम्, चम्पानगरानयनम्, तत्रैव बन्धमोक्षः, सुरतमञ्जरीशापवृत्तान्तस्यात्मनो बन्धविवरणस्य च समाकर्णनम्, दशकुमारमिलनम्, द्वितीयोच्छ्वासात्—अष्टमोच्छ्वासं यावत् अपहारोपहारवर्म्मार्थपालप्रमतिमित्रगुप्तमन्त्रगुप्तविश्रुतानां कुमाराणां यथाक्रमं स्वस्ववृत्तान्तवर्णनम्, विश्रुतराजवाहनयोश्चरितोपसंहारः, राजहंसस्य राष्ट्राधिगतिश्च।

सोमदत्तः—सत्यवर्म्मणो गर्य्यामुत्पन्नः, कालीनाम्न्या विमात्रा सरित्स्रोतसि धात्र्या सह क्षिप्तः दैवगत्या स्रोतसा नीयमानं काष्ठफलकं प्राप्य तत्रारोप्य तया त्रातः, काष्ठफलकलग्नसर्पदंशनेन उपरतायां धात्र्यां वामदेवशिष्येण बालं प्राप्य राज्ञे राजहंसाय उपायनीकृतः। चरितेऽस्मिन् सोमदत्तस्य मणिप्राप्तिः "चौरः" इति तस्य कारारोधः, तत्र बन्दिभिर्म्मानपालकटकं समागत्य युद्धेन जित्वा मत्तकालं परिणीतया चञ्चललोचनया महाकालं गच्छतः अध्वनि राजवाहनेन समागमोऽभूत्।

पुष्पोद्भवः—कालयवननाम्नि द्वीपे कालगुप्तोनाम वणिजः कन्यां सुवृत्तां परिणीय कालक्रमेण भ्रातृविलोकनकुतूहलेन रत्नोद्भवः श्वशुरालयात् निजदेशागमनसमये यानभग्नान्निमग्नयापि धात्रीत्रातया सुवृत्तया वनभूमौ प्रसूतः, वारणभीताया धात्र्याः अङ्कच्युतः सोमदेवशर्म्मणा प्राप्तः राजहंसाय दत्तश्च। चरितेऽस्मिन् वह्निगिरिभ्यां पुष्पोद्भवस्य मातापित्रोस्त्राणम्, अन्योऽन्यपरिचयः, चन्द्रपालबन्धुपालाभ्यामालापः, दारुवर्मणो गुप्तहननम्, बालचन्द्रिकालाभः, राजवाहनेन समागमः।

उपहारवर्म्मा—प्रियंवदायां प्रहारवर्म्मणः उत्पन्नः, राज्यच्युते कानन‌मार्गेण पलायमाने पितरि शार्दूलत्रस्तया उपमातुर्हस्तात् स्खलितः, दैवगत्या मृतकपिलाशवस्य क्रोड़लीनः किरातैः संप्राप्य देव्युपहारीक्रियमाणः, तापसेन च्छलेनानीय राज्ञे राजहंसायोपहृतः। चरितेऽस्मिन् उपहारवर्म्मणः उपमातुर्म्मुखात् पित्रोर्व्यसनाकर्णनम्, पुष्करिकामुखेन च कल्प-

सुन्दर्य्याः पत्यौ द्वेषोत्पादनम्, अलौकिकरूपलिप्सोः विकटवर्म्मणो गूढ़हननम्, राज्याधिगतिः, सिंहवर्म्मसाहाय्यार्थं समुपस्थितस्य तस्य राजवाहनेन सह मिलनम्।

अपहारवर्म्मा—भूपतिरेकदा तीर्थस्नानाय गच्छन् शबर्य्याः क्रोड़े राजलक्षणयुक्तं बालकं वीक्ष्य अर्थादिना तां शबरीं परितोष्य बालकं गृहीत्वा महिष्यै समर्पितवान्। अयमपि प्रियंवदायां अपहारवर्म्मणो जातः। चरितेऽस्मिन् राजवाहनदर्शनमभिलिप्सोरपहारवर्म्मणो महर्षिमरीचेराश्रमगमनम्, तस्य सविधे तद्वेश्यासंसर्गेण स्वतपःस्खलनविवरणाख्यानम्, विरूपकस्य वेश्यासक्त्या आत्मधनक्षयकथनम्, अपहारवर्म्मणो द्युतक्रीड़ा, चौर्य्यम्, पथि कुलपालिकया समागमः, उदारकभवने तस्या नयनम्, भूयोऽपि कुबेरदत्तावासे चौर्य्यम्, अर्थपतेस्तोरणभङ्गः, रागमञ्जर्य्यामनुरक्तिः, चर्म्मभस्त्रिकया तज्जननीस्वसारौ प्रलोभ्य तदुपयमनम्, राजद्वारेऽभियुज्य सापवादमर्थपतिनिर्वासनम्, प्रमत्तस्यापहारवर्म्मणः कारारोधः, तस्मिन् काराध्यक्षं कान्तकं रागमञ्जर्य्याः सेविकया शृगालिकया राजतनयालाभाय विमुह्य तस्याज्ञाक्रमेण कारातः सुरङ्गां विधाय कान्तकं निहत्य तेनैव सुरङ्गापथेनान्तःपुरप्रवेशः, राजदारिकायामम्बालिकायामनुरक्तिः, चण्डवर्म्मणाम्बालिकायाः हरणम्, अपहारवर्म्मणो वधस्तत्र राजवाहनाधिगमश्च।

अर्थपालः—कान्तिमत्यां कामपालाज्जातः, माता श्मशाने परित्यक्तः, तस्मात् विमात्रा यक्षिण्या तारावल्या वसुमत्यै

उपायनीकृतः। चरितेऽस्मिन् अर्थपालस्य पूर्णभद्रमुखात् जनकस्य अत्युग्रद्वारादेशव्यसनाकर्णनम्, स्वप्रयुक्ताहिगरलविचेतनस्य तस्य मृतव्यपदेशेन मात्रा गृहानयनम्, विषप्रकोपोपशमनम्, सिंहघोष-बन्धनार्थं सुरङ्गाखननम्, भूगर्भे च मणिकर्णिकाकन्यकाप्राप्तिः, सिंहघोषबन्धः सिंहघोषसाहाय्यार्थं समागतस्य तस्य राजवाहनेन समागमः।

प्रमतिः—मन्त्रिसुमतेर्जातः तरोरधः प्रसुप्तस्य तारावल्या प्रसादानीतस्य तस्य नवमालिकासमागमः अन्योऽन्यानुरागबन्धः, तयैव भूयः पूर्वतरुमूलानीतस्य सुप्तोत्थितस्य तस्य निर्वेदः, तारावलीमुखात् कुमारीवृत्तान्तश्रवणम्, नवमालिका-प्राप्त्यर्थं श्रावन्तीयात्रा, अध्वनि पञ्चालशर्मणा संलापः, श्रावन्त्यां सखीमुखादात्मनि नवमालिकानुरक्तिश्रवणम्, पाञ्चालशर्म्म-कन्याव्यपदेशेनान्तःपुरप्रवेशः, स्नानव्यपदेशेन च अपसर्पणम्, पाञ्चालशर्म्मजामातृमिषेण भूयः समुपस्थितिः, न्यस्तकपटद्विज-कुमारीविनिमयेन राज्ञो नवमालिकासमर्पणम्, सिंहवर्म्मार्थ-समागतस्य प्रमतेः राजवाहनेन समागमः।

मित्रगुप्तः—सुमित्राज्जातः तस्य च दामलिप्तनगरे बाह्यो-द्यानप्रवेशः, तस्मिन् कोषदासेन समागमः, चन्द्रसेनोपस्थितिः, सर्व्वेषां कन्दुकवत्याः क्रीड़ासन्दर्शनम्, मित्रगुप्तकन्दुकवत्योः अन्योऽन्यानुरागाभिव्यक्तिः भीमधन्वना मित्रगुप्तस्य जलधि-निक्षेपः. नाविकानामुद्धारः, पोतयुद्धेन मित्रगुप्तस्य भीमधन्वावग्रहः, कस्मिंश्चिद्द्वीपे ब्रह्मराक्षससमागमः, तेन किं क्रूरं, किं

गृहिणः प्रियहिताय, कः कामः, किं दुष्करसाधनमिति पृष्टम्, तेषामपि प्रश्नानाम्—स्त्रीहृदयम्, दारगुणाः, संकल्पः, प्रज्ञा, इत्युत्तरमिषेण धूमिनी-गोमिनी-नितम्बवतीनामाख्यानोपवर्णनम्, अपर राक्षसचोरितायाः कन्दुकवत्याः अम्बरात्फेन मोचनम्, दामलिप्तनगरागमनञ्च। कन्दुकवत्या उद्यमनम्, सिंहवर्म्मप्रसङ्गेन राजवाहनेन समागमः।

धूमिनी—त्रिगर्त्तजनपदे प्रकृति दुर्भिक्षे समुपगते भक्ष्याभावपीड़ितैः ध्वण्युर्भ्यैर्गवां यूथं दासीदासजनमपत्यानि ज्येष्ठमध्यमभार्य्ये च क्रमेण भक्षयित्वा कनिष्ठभार्य्या धूमिनी-भक्ष्यता परिकल्पितेति धन्यकेन भर्त्रा तानपनीय व्रता, तत्पोषितं कमपि विकृतपाणिपादकर्णनासिकं विकलाङ्गं कामयमाना, तृष्णार्त्तं भर्त्तारं कूपे निक्षिप्य तमेव विकलाङ्गं स्कन्दमारोप्य देशान्तरं गता, कदाचित् सार्थवाहव्रातं धन्यकमवलोक्य 'एष हि ममायाङ्गवैकल्यकृत्' इति राजद्वारे अभियुज्य तस्य प्राणदण्डाज्ञामकारयत्। ततः स पङ्गुः कृतप्रान्तःकरणतया तस्याः दुश्चरितं वर्णितवान्। तस्माच्च क्रुद्धेन राज्ञा सा कुक्कुरपाचिका कृता।

गोमिनी—द्राविड़ेषु काञ्चिनामनगर्य्यां शक्तिकुमारं श्रेष्ठिसुतं शालिप्रस्थेनैव निष्पन्नं भक्ष्यमभोजयत्। तेन च परितुष्टेन श्रेष्ठिपुत्रेण सा ऊढ़ा। जातु, पतिं वाररमणीसंसक्तं ज्ञात्वाप्यरुष्टा पत्युर्बहुमता आनन्दमाससाद।

निम्बवती—सौराष्ट्रजनपदे वलभीनाम नगर्य्याम् बलभद्रनाम्ना

वणिक्पुत्रेण परिणीता, तया रहसि रभसविघ्नितसुरतसुखो झटिति द्वेषं बबन्ध। ततः सा भर्त्तुरनभिमता परिव्राजिका-मन्त्रणया कनकवतीनाम गृहीत्वा भर्त्तुर्बहुमता देशा-न्तरमगात्। तत्र क्रुद्धया चेट्या 'परनारीहारी' इति पौरेषु अभियुक्ते भर्तरि 'साहम्' रत्नवतीति रहस्यं प्रकाशयामास।

नितम्बवती—अवन्तिपुर्य्यामनन्तकीर्त्तिनाम्नः स्थविरसार्थ-वाहस्य भार्य्या सातिशयपतिपरायणा, तत्कामुकेन कलहकण्टक-नाम्ना शूद्रपुत्रेण श्मशानकृतावासेन श्रमणिकया पुत्रार्थं प्रलोभ्य प्रतार्य्यमाणा हृतपादाङ्गदा क्षतोरुमूला सप्रमाणं 'पिशाची' इति प्रख्यापिता; पत्या परित्यक्ता च। सा मर्त्तुकामा कलहक-ण्टकेन स्वायत्तीकृता।

मन्त्रगुप्तः—मन्त्रिसुमन्त्रादुद्भूतः, स कदाचिद्रात्रौ वनावनौ शयानः श्रुतकिङ्कराक्रन्दनमनुसरन् कर्द्दमकन्यकां कनकलेखां बलिमभिलषन्तं तापसं निहत्य किङ्करैः कन्यावरोधं नीतः, तत्र गूढ़ं विचरन् जयसिंहेन सागरतीरोद्यानगतेन जनकेन समपहृत-जायाशोकविधुरः वर्णिलिङ्गी आन्ध्रं यात्वा शाठ्येन जयसिंहं सरोमध्ये गूढ़ं हत्वा स्वयं नवीनरूपधृक् जयसिंहोनाम गृहीत्वा प्रजापालनसुखमनुभवन् सिंहवर्म्मप्रसङ्गेन चम्पामागत्य राज-वाहनेन मिलितः।

विश्रुतः—सुश्रुतादुत्पन्नः, विन्ध्यारण्ये विचरतस्तस्य भास्करवर्म्मणा संलापः, कूपपतितस्य नालीजङ्घस्य उद्धरणम्, तस्य मुखात् अनन्तकीर्त्तिदुर्नीतिंवसन्तभानुराज्याधिगमवसुन्धरा-

कामुकामित्रवर्म्मप्रसङ्गादिसमाकर्णनम्, भास्करवर्म्म-नालीजङ्घाभ्यां भक्ष्यापर्णम्, आत्मनोऽपि भोजनम्, विषमालाप्रयोगेण वसुन्धरया मित्रवर्म्मवधः, देवीविग्रहमूलात्, भास्करवर्मणो विश्रुतस्य च उद्गमनम्, वसन्तभानुं विजित्य भास्करवर्म्मणः जनकपदप्रतिष्ठापनमिति दशकुमारचरितवस्तु-संक्षेपः ।

---

## मालविकाग्निमित्रसमालोचनम्—

'नाटकं ख्यातवृत्तं स्यात्' इत्युक्तेर्नाटकस्यास्य नाटकत्वे सन्दिहते केचन सभ्याः, तत्तु तेषां प्रमादिका धारणेति वक्तुमलं स्मः ; यतो भागवतविष्णुपुराणादिषु पुराणनिबन्धेषु राज्ञोऽग्निमित्रस्य कथांशस्य लाभेन तथात्वप्रतीतिर्न श्रद्धेया । विस्तरतश्च तदेतस्यनाटकस्य व्याख्यानावसरे उपपादितमस्माभिः, नेहोक्तं विस्तरभयात् । एतन्निबन्धस्य पुनः कालिदासप्रणीतत्वमप्यङ्गीकर्त्तुं नाभिलषन्ते केऽपि विद्वन्मन्यास्तत्तु हेयं प्रमाणाभावात् । न च वर्णनाशैथिल्यमत्र प्रमाणमिति वाच्यम्, अस्य खलु कालिदासप्रणीतत्वेऽपि तस्य लेखस्य एव प्रमाणत्वात् । कालिदासकल्पनामृते नैतादृशी कल्पना सम्भवतितरामन्येषां कल्पनाकुशलानाम् । तथा च—प्रथमतः चेट्याः कौमुदिकायाः हस्ते नागमुद्राङ्किताङ्गुरीयकं कल्पयित्वा केतकीकुसुमकण्टकशैलेनापविद्धेन विदूषकेण सर्पदन्तजक्षतं व्यपदिश्य तेनैव सारभाण्डभृगृहतः धारिण्या निरुद्धायाः मालविकायाः मोचणमतिशय-

कौशलेन भावपरिशुद्धसंयोजनपद्धतिधारया च प्रतिपादितम्। तथा 'वामं सन्धिस्तिमितवलयं न्यस्तहस्तं नितम्बे' इत्यादि सरलवर्णनं, अन्यत्र—

'मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः।
पङ्कच्छिदः फलस्येव निकषेणाविलं पयः॥'

इत्यादि सरलकवितानामपि यदत्यर्थोऽलङ्कारसमलङ्कृतत्वञ्च तदत्यद्भूतं नाम महाकवेः काव्यमार्गे साधयति परमुत्कर्षं; दृश्यते हि प्रायेणान्यकविप्रबन्धेषु सकलकवितानामलङ्कारपरिहीनता, क्वचित् क्वचिदपि नानालङ्कारसमलङ्कृतञ्चेत् पदबन्धस्य भावबन्धे वाप्यतिकाठिन्यं, किन्तु कालिदासकविताः सुतरां सारल्यविजृम्भिता अपि समलङ्क्रियन्ते विपुलभावालङ्कारैः। अलङ्कारैश्च समलङ्कृताः कविताः वनितास्तस्य कविकुलललामतां समुपस्थापयन्ति। 'पत्रच्छायासु हंसा मुकुलितनयना दीर्घिकापद्मिनीनाम्॥' इत्यादि स्वभावसुन्दरभावनिवहोपवर्णनपद्यं प्रमाणयति, कालिदासस्य कृतिविषयेऽतिमात्रमनुकूलताम्। तथाच—'गृहीतदक्खिणोह्मि। किं तु मेहावलीणिरुद्धा जोण्हा विअ पराहीणदंसणा तत्तहोदी' इत्यादि विदूषकवाक्ये यातु रात्रस्तात्कालिकावस्था सरलभावनिबन्धेन अलङ्कारसन्निवेशेन च प्रतिपादिता, तदतिशयहृद्यं सहृदयानाम्। काव्यस्योपक्रमोपसंहारयोरप्यद्वितीयकवेः कालिदासस्यानन्यसाधारणीं प्रतिभामुद्योतयति प्रत्येकांशसन्निवेशनचातुर्य्यम्। 'क्व वयं क्व परोक्षमन्मथः

इत्यादि शाकुन्तलस्य कवितापाठेन यादृगेव मनोवृत्तिः सज्जनाना-मुपपद्यते,—

'क्व रुजा हृदयप्रमाथिनो क्व च ते विश्वसनीयमायुधम् ।

मृदु तीक्ष्णतरं यदुच्यते तदिदं मन्मथ दृश्यते त्वयि ॥'

इति कवितापि तदनुरूपार्थभावनिवहं वर्णयोजनपद्धतिश्चोद्बोध्य एकस्यैव रचयितुर्महाकवेः कालिदासस्य विश्वविश्रुतोपस्थापिन्या महाशक्त्या आनन्दधारामुपस्थापयति सचेतनानां चेतसि। अपि च प्रथमत एव परस्परप्रतिपक्षयोः गणदास हरदत्तयोर्नाट्याचार्य-योर्विदूषकेण कलहं जनयित्वा यत् निगूहितामपि मालविकाम् अभिनयग्रहमानाय्य राज्ञोऽग्निमित्रस्य तस्यामतिशयितं भावा-भिनिवेशः प्रकटितः, परतश्च तस्यामेव मालविकायामनुरागाभि-व्यक्तिः, यत्र यत्र यया दिशाव्यज्यत कविना तदतितरां हृद्यम्। तथा प्रकोपिताया इरावत्याः पादयोः पतित्वा राज्ञः प्रसादनञ्च नायकानां दाक्षिण्याभिव्यञ्जकं तत् काव्यस्य नापकर्षसूचकं, तथाकल्पनमाचार्य्यैरभिहितत्वेन श्रद्धेयं सहृदयानाम्। तथाहि—दशरूपके—'दानं व्याजेन भूषादेः, पादयोः पतनं नतिः' इत्युक्तेः प्रकोपितायाः पादपतनं न नीतिमार्गविमुखपरिकल्पनं कवीनाम्। पञ्चमेऽङ्के काव्यस्यास्य पुत्रविजयवार्त्ताश्रवणोत्सुकां धारिणीं भर्त्तुः प्रियकारिणीमुद्भाव्य राज्ञे मालविकां समर्पयन् तस्याः हृदयस्य परमौदार्य्यं, तामपि च निखिलरमणीजनादर्शभूतां राजमहिषीं व्यजिज्ञपत् सकलकविगुणोपचीयमानः श्रीमान् कालिदासः। इत्यलं बाहुल्येन।

कौशलेन भावपरिशुद्धसंयोजनपद्धतिधारया च प्रतिपादितम्। तथा 'वामं सन्धिस्तिमितवलयं न्यस्तहस्तं नितम्बे' इत्यादि-सरलवर्णनं, अन्यत्र—

'मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः।
पङ्कच्छिदः फलस्येव निकषेणाविलं पयः॥'

इत्यादि सरलकवितानामपि यदत्यर्थोऽलङ्कारसमलङ्कृतत्वञ्च तदत्यद्भूतं नाम महाकवेः काव्यमार्गे साधयति परमुत्कर्षं; दृश्यते हि प्रायेणान्यकविप्रबन्धेषु सकलकवितानामलङ्कारपरिहीनता, क्वचित् क्वचिदपि नानालङ्कारसमलङ्कृतञ्चेत् पदबन्धस्य भावबन्धे वाप्यतिकाठिन्यं, किन्तु कालिदासकविताः सुतरां सारल्यविजृम्भिता अपि समलङ्क्रियन्ते विपुलभावालङ्कारैः। अलङ्कारैश्च समलङ्कृताः कविताः वनितास्तस्य कविकुलललामतां समुपस्थापयन्ति। 'पत्रच्छायासु हंसा मुकुलितनयना दीर्घिका-पद्मिनीनाम्॥' इत्यादि स्वभावसुन्दरभावनिबद्धोपवर्णनपद्धं प्रमाणयति, कालिदासस्य कृतिविषयेऽतिमात्रमनुकूलताम्। तथाच—'गृहीतदक्खिणोह्मि। किं तु मेहावलीणिरुद्धा जोण्हा विअ पराहीणदंसणा तत्तहोदी' इत्यादि विदूषकवाक्ये यातु राज्ञस्तात्कालिकावस्था सरलभावनिबन्धेन अलङ्कारसन्निवेशेन च प्रतिपादिता, तदतिशयहृद्यं सहृदयानाम्। काव्यस्योपक्रमोप-संहारयोरपरद्वितीयकवेः कालिदासस्यानन्यसाधारणीं प्रतिभामुद्योतयति प्रत्येकांशसन्निवेशनचातुर्य्यम्। 'क्व वयं क्व परोक्षमन्मथः

इत्यादि शाकुन्तलस्थकवितापाठेन यादृगेव मनोवृत्तिः सज्जनाना-मुपपद्यते,—

'क्व रुजा हृदयप्रमाथिनो क्व च ते विश्वसनीयमायुधम् ।
मृदु तीक्ष्णतरं यदुच्यते तदिदं मन्मथ दृश्यते त्वयि ॥'

इति कवितापि तदनुरूपार्थभावनिवहं वर्णयोजनपद्धतिश्चोद्बोध्य एकस्यैव रचयितुर्महाकवेः कालिदासस्य विश्वविश्रुतोपख्यापिन्या महाशक्त्या आनन्दधारामुपस्थापयति सचेतनानां चेतसि । अपि च प्रथमत एव परस्परप्रतिपक्षयोः गणदास हरदत्तयोर्नाट्याचार्य-योर्विदूषकेण कलहं जनयित्वा यत् निगूहितामपि मालविकाम् अभिनयगृहमानाय्य राज्ञोऽग्निमित्रस्य तस्यामतिशयितं भावा-भिनिवेशः प्रकटितः, परतश्च तस्यामेव मालविकायामनुरागाभि-व्यक्तिः, यत्र यत्र यया दिशाव्यज्यत कविना तदतितरां हृद्यम् । तथा प्रकोपिताया इरावत्याः पादयोः पतित्वा राज्ञः प्रसादनञ्च नायकानां दाक्षिण्याभिव्यञ्जकं तत् काव्यस्य नाधकत्वसूचकं, तथाकल्पनमाचार्य्यैरभिहितत्वेन अज्ञेयं सहृदयानाम् । तथाहि—दशरूपके—'दानं व्याजेन भूषादेः, पादयोः पतनं नतिः' इत्युक्तेः प्रकोपितायाः पादपतनं न नीतिमार्गविमुखपरिकल्पनं कवीनाम् । पञ्चमेऽङ्के काव्यस्यास्य पुत्रविजयवार्त्ताश्रवणोत्सुकां धारिणीं भर्त्तुः प्रियकारिणीमुद्भाव्य राज्ञे मालविकां समर्पयन् तस्याः हृदयस्य परमौदार्य्यं, तामपि च निखिलरसयोजनादर्शभूतां राजमहिषीं व्यज्ञिज्ञपत् सकलकविगुणोपचीयमानः श्रीमान् कालिदासः । इत्यलं बाहुल्येन ।

तत्प्रतिपाद्यम्—प्रथमेऽङ्के–चित्रशालायां धारिणीचित्रित-पटस्यान्ते निगूहितायाः मालविकायाः प्रतिमूर्त्तिं वीक्ष्य राज्ञोऽग्निमित्रस्य तां प्रति प्रेमाभिनिवेशः।

द्वितीये—विदूषकेण नाट्याचार्ययोःहरदत्तगणदासयोः कलहं जनयित्वा तां मालविकामानाय्य रङ्गभूमिं, राज्ञे समवलोकनं, ततश्च राज्ञस्तस्यामनुरागाभिव्यक्तिश्च।

तृतीये—विदूषकेण मालविकामभिलषतो राज्ञो मनोभावं मालविकायाः प्रियसखीं बकुलवलिकाम् एव अव गमय्य यथा तयोः मेलनं घटेत, तदुपायमुद्भाव्य प्रमोदवने राज्ञा सह मालविकाया मेलनम्, भोगिन्या इरावत्या च तदीक्षणम्, तेन क्रुद्धायाः तस्या राज्ञा प्रसाद्यमानायाः अपि तस्मात् बहिर्गमनम्।

चतुर्थे—इरावती 'राजा मालविकामभिलषति' इति धारिण्यै विज्ञाप्य सवयस्यां मालविकां देव्या धारिण्या निगड़यित्वा भूनिम्नगृहे निवेशयामास। ततश्च केतकीकुसुमकण्टकेनात्मानं संविध्य सर्पदंशनं व्यपदिश्य धारिणीतः सर्पविषहरमङ्गुलीयकं लब्ध्वा तदभिज्ञानं नियमनगृहद्वारिणे दर्शयित्वा विदूषकेण सवयस्यायाः मालविकायाः मोक्षणम्।

पञ्चमे—धारिण्या मालविकार्थंऽङ्गीकृतार्थप्रतिपादनाय परिव्राजिकया नेपथ्यविधानेन मालविकां सज्जीकृत्य ताभ्यां सह प्रमोदवनगमनम्। तत्र परिव्राजिकया मालविकायाः निगूहनकारणवर्णनम्, पुत्रविजयवार्त्ताश्रवणेन धारिण्या राज्ञे मालविकायाः पारितोषिकत्वेन प्रदानम्; सुष्ठु वर्णितमस्तीति संक्षेपः।

**नायकादि-सिद्धान्तः**—अत्र नायको विदिशाधिपतिरग्निमित्रो धीरोदात्तः, नायिका च मालवदेशाधिपतेः माधवसेनस्य स्वसा मालविका मुग्धा। धारिणी राज्ञः कृताभिषेका महिषी, भोगिनी चेरावती।

तस्याः प्रतिनायिका प्रगल्भधीरा एभिरालम्बनैः वसन्तवात्यादिभिरुद्दीपनविभावैः शर्मिष्ठाकृतिच्छलिकप्रबन्धाभिनये मालविकायाः भ्रूक्षेपादिभिरनुभावैर्विषादौत्सुक्यस्मृत्यादिभिर्व्यभिचारिभावैरास्वादपदवीमारूढ़ो रत्याख्यः स्थायिभावः आलेख्येक्षणात् समुद्रगृहे मालविकोपगमनं यावत् विप्रलम्भशृङ्गारस्य पूर्वरागाख्यो भेदः। ततश्च संभोगशृङ्गारः। हासकरुणादयोऽङ्गरसाः, विदूषकाद्याः सहायाः, रीतिः पाञ्चाली, गुणो माधुर्य्याख्यः, प्रस्तावनावलगिताख्या।

---

## उत्तररामचरितसमालोचनम्—

उत्तररामचरितं नाम नाटकोत्तमं श्रीमन्महाकविना श्रीकण्ठेन प्रणीतम्। एतन्नाटकं किल रामायणान्तर्गतं सीतानिर्व्वासनमधिकृत्य विरचितम्। एतस्मिन् नगनदीकाननादीनामतिमञ्जुलतमेषु प्रत्यभिज्ञायमानेषु स्वभाववर्णनेषु कवेर्महत्त्वात्मकवित्वशक्तिः प्रतिफलिता। एवमकृत्रिमस्नेहप्रेमशोकविरहादिवर्णनेषु च यादृशी प्रतिभा प्रस्फुटिता, तादृशी न सर्व्वत्र सुलभा च जगति। शिशोः प्रथमोच्चारिता वागिव श्रवणसुख-

मादधाति, निर्जनगगणान्तःसञ्चारिणी मधुरझङ्कारसंवादिनी माधुर्य्यमयी वीणेव वाक्यरसधारा सन्ततमेव मर्म्मस्थलोच्छ्वासिनी प्रतिभासते। संसारक्लिष्टा अपि काव्यानुशीलनवशीकृताः नितरां विश्राम्यन्ति शान्तिमन्तश्च क्षणं ब्रह्मानन्दसन्तृप्त इव नापर-विषयमपेक्षते कण्ठविलम्बिनीव स्वेदविद्रूनशरीरस्य मुक्तामाला-परितप्तस्य शान्तिमुपपादयते। परम प्रियजनसमागमतृप्तिरिव परं प्रसरन्ती हृदयान्तराले स्वच्छता समुच्छेदयति प्रबलामपि संसारशोकपद्धतिम्। तथा च कविर्यथा यथा येन भावा-नभिव्यञ्जयामास, ते हि कवीनां काव्यनिवर्हेषु दृष्टान्तता-मुपादधते। प्रारम्भ एव नैपुण्येन सूत्रधारस्य नटस्य च कथाच्छलेन प्रारम्भकथाप्रदेशमुपक्रम्य नैपुण्यमदर्शयत्। अन्यथा आकस्मिक इव कथासम्पातो दर्शकानां श्रोतॄणां व्यामोहमेव समुत्पादयेत्। दूरतो वर्त्तताम् अभिनयदर्शनेन प्रीतिधारा, शिक्षाप्राप्तिः कवित्वपर्य्यालोचनेन वा, तथा च—'भाव, प्रेषिता हि दूतः स्वगृहान्महागजेन लङ्कासमरसुहृदो महात्मानः प्लवङ्गराक्षसाः' इत्यादि ततश्च रमं तथा गभीर-प्रणयविशुद्धमुपदेशप्रदाननिरतमुपस्थाप्य सीतायां प्रगाढ़प्रणयं रामस्य परिदर्शयामास। अनन्तरं योगिप्रधानस्य अष्टावक्रस्य मुनेः समुपस्थापनम्; सीतायाः भावि वनगमनमेवानुकूलयति। अपि च 'वीरप्रसवा भूयाः' इत्यनन्तरं रामेण—

'लौकिकानां हि साधूनामर्थं वागनुवर्त्तते।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति॥'

इति वाक्योपन्यासेन मुनिवाचां सत्यत्वख्यापनेन कुश-लवयोस्त्रिलोकविख्यातविक्रमयोरुद्भवः प्रख्यापितः। वनगमनानुकूला च वाणी मुनेरष्टावक्रस्य यथाहि—'इदञ्च भगवत्या अरुन्धत्या देवीभिः' इत्यादि। तदनन्तरं रामः—'क्रियते यद्यदेषा कथयति।' अपि च यत् प्रजारञ्जनार्थमेव रामः सीतां कान्तारे प्रस्थापयामास, तत्रानुकूलम्—

'जामातृयज्ञेन वयं निरुद्धास्त्वं बाल एवासि नवञ्च राज्यम्।
युक्तः प्रजानामनुरञ्जने स्यास्तस्माद्यशो यत् परमं धनं वः॥'

इति वशिष्ठेनोपदिष्टम्। अथ नवीनया दिशा प्रवर्त्तमानेन कविना विनोदयितुम् उन्मनायमानायाः सीतायाः चित्तं चित्रपरिदर्शनेन समुद्बोधिता पूर्व्वतनवनवासस्मृतिः, तया च सीता भूयो वनं द्रष्टुं सकामा जाता। रामेण स्मृतगुरुजनादेशेन कर्त्तव्यपरायणेन चानुमन्यते तदानीम्। ततो दुर्मुखवचनश्रवणआतुरः सीतैकसमासक्तमानसोऽपि प्रजारञ्जनमेव कर्त्तव्यं मन्यमानः सीतामज्ञापयित्वेव वनस्थापन संवादं लक्ष्मणेन वनं प्रेषयामास। कल्पनेयं नूतनतमा सहृदयहृदयग्राहिणी च संवृत्ता। अन्यथा चित्रमपरिदर्श्य यदि केवलं दुर्मुखवचनश्रवणमात्रेणैव कठोरतया सीतायाः अनभिमतमपि वनवासः कविः राममुखेन प्रत्यपादयिष्यत्, तदा रामस्य प्रेम्नो गभीरता विध्वस्ता अभविष्यत्। सीतायाश्च करुणक्रन्दनेन विवासितो गलितहृदयो वा रामः काव्यहानिं व्यधास्यत्। यथा सीतानुरागिणं रामं कविः कल्पयामास, तत्र युज्यते तथैवेति। अतएव भावपरिभ्रंशभीत-

कवि: कौशलेन रामस्य सीतावनप्रेषणादेशोपयोगं कल्पयितु-कामो नवीनेन मार्गेण चित्रदर्शनमुपकल्प्य सीतां वने गमनोन्मुखीं चकार। 'चित्रदर्शनावसरे तत्तत्स्थानेष्वनुभूतं भावं राममुखेन सीतामुखेन च प्रतिपाद्य तयोः प्रणयस्यातितरां प्रबलत्वं समाशंसितम्। तेन च तथा प्रियतमयोरपि तयोः कर्त्तव्यानुरोधेन विरहभोगः सुतरामुत्कर्षसाधक इति। सीता—'हद्धी हद्धी अहं वि अदिभूमंगदेण' इत्यादि वाचा परतः—'वत्सैतस्माद्विरमविरमातःपरं न क्षमोऽस्मि' इत्यादिना दुर्मुखवचनमविज्ञातस्य रामस्य भाविसीताविरह-कातरत्वं चेतसि समुद्भावयति। तदानीमपि न जानाति सीताया वनवासं, तथापि यदत्यर्थं चित्रपरिदर्शनेन चञ्चलता, नितरां तदन्यथा कथं सम्भावयितुमर्हामः। अन्यत्र रामः—प्रिये किमेतत्? विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा' इत्यादि भावमय्या गाथया प्रतिपद्यते रामस्य स्वच्छहृदयस्य प्रणयैकप्रवणमानसस्य विमुग्धता, तां प्रतिपादयितुकामेनापि सर्वेणैव विपर्य्यस्यते, नास्ति तत्-प्रकाशनोपयोगिनी भारती, यया प्रकृतामवस्थां प्रकाशयितुं शक्यते। अपिच—'म्लानस्य जीवकुसुमस्य विकाशनानि' इत्यादिना यथा प्रणयस्य गभीरताविकाशिनीं भारतीं कविः प्रतिपाद्यते, न तथा सर्वत्र सुलभा। 'अद्वैतं सुखदुःखयो-रनुगुणम्' इत्यादिना रामस्य यथा प्रणयाभिज्ञता, सप्रेमहृदयता च समुपस्थापिता, तथैव तस्य परतोऽप्यवस्था नास्ति प्रक्रमोप-

संहारयोरसमानता, असीमप्रणयसमाश्लिष्टहृदयस्य तस्य च युज्यत एव नारीजनोपमित्या सीतार्थं कानने कातरं विलापविकासनम्। यस्याः स्पर्शं मन्दारकुसुमदाम इव प्रमोदजनकमुत्प्रेक्षते रामः, यस्याः वचनं सुधामयमिव, सन्तप्तस्य तृप्तिमिव, श्रान्तस्य शान्तिमिव, परब्रह्मोपासकस्य आनन्दमयमिव गणयति, तस्या एव हृदयैकसमालम्बनीभूतायाः सीतायाः अपि यत् प्रजारञ्जनार्थं श्वापदसमाकीर्णे कान्तारे विसर्जनं तदतितरामेव राजगुणविकाशकमिति नाटकीयनायकस्य राजवृत्त पारदर्शिनो विशेषतः समुत्कृष्टतामेव सम्पादयितुकामः कविः कल्पनामतिललितया दिशा प्रवर्त्तयामास, तदुपयोगिनी वाणी तन्मुखेनैव प्रकाशयति—

'स्नेहं दयाञ्च सौख्यञ्च यदि वा जानकीमपि।
आराधनाय लोकानां मुञ्चतो नास्ति मे व्यथा॥'

इति, तृतीयाङ्के च तस्यैव रामस्य करुणरसविद्रावितमानसमिति वासन्ती च तत्प्रकाशसहकारिणीति तथा च—'यत्र द्रुमा अपि मृगा अपि बन्धवो मे' इत्यादिना पञ्चवटीदर्शनेन

'अन्तर्लीनस्य दुःखाग्नेरद्योद्दामं ज्वलिष्यतः।
उत्पीड़ इव धूमस्य मोहः प्रागावृणोति माम्॥'

'हा! प्रिये जानकि' इत्यादिभिश्च प्रतिपादितम्। अयञ्च छायाङ्क इति प्रतिपाद्यते सुदूरसमीक्षमाणैरपि काव्यरसिकैः। तथा च सीतायाः देवीवरप्रभावेण वनदेवतयापि नूनमदर्शनं तदानीं

रामो वासन्ती च सीतां नावलोकयतः। सीता तु उभयोरेव वाचं शृणोति, उभौ चावलोकयते इति रमणीयतमो निर्देशः। तथा चान्तरान्तरा सीताशरीरस्पर्शविमुग्धो रामचन्द्रः स्वप्नलब्धमिव स्वर्गसुखं स्मृतिविषयतामिव मन्दाकिनीरसाभिषेकमिवानुभूतसुधानिषेकमिव पूर्वतनं सीतायाः स्पर्शमुपगतः क्षणं प्रमोदमयः, क्षणञ्च तद्विभ्रंशकातरतामयो नानाविधेन भावेन वितस्तो विरहवेदनां बहुधानुभवति। विरहेण विना न मेलनं सुखावहं, अतः क्षणं मेलनं क्षणञ्च तद्वैधुर्य्यमुपपादितं कविना। वासन्तीं नाम वनदेवतां सीतादेव्यास्तादृशीं सहकारिणीं कल्पयित्वा कल्पनाराज्येषु सर्व्वोच्चस्थानमधिचकार कविवरः। उपसंहारे तु 'वयं' नास्ति कथमन्यथा वासन्त्यपि तां न पश्येत्? अपि खलु स्वप्न एव स्यात् न चास्मि प्रसुप्तः कुतो वा रामस्य स्वप्नः?' इत्यादौ अहो! माधुर्य्यम् निराशतायाः! अहो! धैर्य्यस्य प्रकर्षः!! यदर्थमेव विमनायितो रामचन्द्रः यस्याः स्पर्शेनापि समुज्जीवित इव सुधाप्लुत इव नव वपुष्मानिव तदानीमभवत्। सा चेयं नास्तीति, कल्पनायामपि यद्‌गम्भीरभावेन धैर्य्यं सहाय एवातिष्ठत्तदानीं तदेव तस्य प्रकर्षः। बहुवारं सीतया विप्रलब्ध इव शेषे परिकल्पयामास सीतागमनस्य मिथ्यात्वमेव, परतः मूर्च्छामधिजगाम स एव तस्य धैर्य्यसीमा। ततो जनकस्य रौद्रभावजुष्टं रामस्नेहं, कुशलवयोः प्रकृत्या वीरवृत्तविकाशश्च सातिशयआश्चर्य्यजनकः समजनि। चन्द्रकेतोश्च वीरविक्रमविकाशः

कुशलवयो: श्रीरामचन्द्रस्य च स्निग्धभाव: सहृदयानां हृदयं हरतीति स्वसंवेद्यमेव सर्वेषां बालकानां कुशलवचन्द्रकेतूनां सिंहविक्रमविकाशेन सुतरामनन्यकल्पनीयतामुपाधत्ते, स्वतएव कवीनां तत्तोन्मुखत्वम् अनुशीलनञ्च। अथ कौशलेन नाटकान्तरे नाटकाभिनयमुपकल्प्य कवि: सम्पूर्णभावेन नूतनां दिशं परिदर्शयामास। इयं कै: अन्यैरपि अननुशीलितेति कवे: प्रकर्ष:। तथा च तत्र रामस्य नाटकाभिनयसन्दर्शनसमासक्तस्य प्रक्रान्ताभिनयदर्शनोद्भ्रान्तस्य 'वत्स' इति परिप्लवनहृदयं ततश्च राम:—मुग्धोऽस्मि हा! प्रिये, लोकान्तरमसि गता?' कथं विलय एव वैदेह्या: सम्पन्न:? हा! देवि, दण्डकारण्यवासप्रियसखि, हा! चरित्रदेवते लोकान्तरं पर्य्यवसितासि? (इति मूर्च्छति) (नेपथ्ये) अपनीयताम् आतोद्यकम्' इत्यादि (तत: प्रविशति सीता अरुन्धती च) सीता—(ससम्भ्रमं स्पृशन्ती) 'समस्ससिदु अज्जउत्तो' राम:—भो: किमेतत्? कथं देवी?' इत्यादि, अनेन च प्रकारेण यत् कविना वाल्मीकिना प्रस्तावितं मिलनसंवादमुपन्यस्य चमत्कृतं विश्वमिदमित्यस्माकं हृदयम्। तथाहि—साधारणेषु कलङ्कभागिनीति विश्रुता सीता तथा निर्दोषतया व्यवस्थापनीया, यथा सर्व्वे एव ज्ञातुमर्हन्ति यत् सीता निरपराधा निष्कलङ्का पवित्रतमा मन्दाकिनीव देवतानामपि प्रियतमेति, तदाशयैव साधारणज्ञापनीयमभिनयमुपक्रम्य सीतया रामसंयोग: सम्पादित इति, तथा च लक्ष्मण:—'आर्य्य, एवमार्य्यया अरुन्धत्या निर्भर्त्सिता: पौरजानपदा: कृत्स्नश्च भूतग्राम आर्य्यां

नमस्कुर्व्वन्ति, लोकपालाः समर्षयश्च पुष्पवृष्टिभिरुपतिष्ठन्ते ।'

इति पर्य्यालोचकाः केचिदेवं चित्रपरिदर्शनस्य सार्थकतामुपवर्णयन्ति। तथाहि—चित्रपरिदर्शनप्रस्तावेन नाटकस्य प्रारम्भ एव रामस्य पूर्व्वचरितं दर्शकानां निवेदयामास कविः, तेन च उत्तरचरितप्रस्तावे किमपेक्षा चरित्रस्योत्तरत्वम् इति नाकाङ्क्षा सभ्यानाम्, अन्यथा बहुपर्य्यालोचनेन केचित् न ज्ञातुं शक्नुवन्ति केचिद्वा अपरिज्ञाततत्तद्भावा एव नाटकदर्शनेषु विमुह्यन्ति। अतो वृत्तान्तस्योत्तरस्याकस्मिकत्वपातशङ्का निराकरणार्थं चित्रदर्शनं पूर्व्वचरितबोधार्थम्। अपि च कुश लवयोर्जृम्भकास्त्रादिसमागम वर्णनेन च परतः प्रतिपादयिष्यमाणं कुशलवप्रमुक्तजृम्भकास्त्रप्रयोजनं चन्द्रकेतुबलेषु नाकस्मिकमित्यादिकं बहुवचः समनुभवनीयम् अनुभवशीलैरित्यलम् बहुजल्पनेन ।

**संक्षिप्तेतिवृत्तम्**—प्रथमेऽङ्के—लक्ष्मणेन सीतायाश्चित्रपटपरिदर्शनम्। तेन च तस्याः प्रागदृष्टतपोवनगमनवासनाभिजाता। ततो दुर्म्मुखमुखादाकर्णितं जनगणोद्भाषितापवादमाकर्ण्य श्रीरामचन्द्रः तपोवनदर्शनव्याजेन तां लक्ष्मणेन वनं निर्व्वासयामास।

द्वितीये—शम्बूकविनाशाय रामस्य पञ्चवटीगमनम्, तत्र तेन शम्बूकवधः, शम्बूकस्य दिव्यरूपप्राप्तिः, पञ्चवट्याः तरुलतादिदर्शनेनानुपदमेव सीतास्मरणात् तदर्थमनुतापः ।

तृतीये—देववरप्रभावेण अन्यैरलक्षीभूतायाः सीतायाः विरहविदूनान्तःकरणस्य रामस्य दर्शनेन विलापोक्तिः, वासन्ती रामयोः कथोपकथनम् ।

चतुर्थे—अरुन्धतीकौशल्यादीनां जनकराजसमागमस्तेषां खेदः, परतो लवस्यागमनम्।

पञ्चमे—महाकृतोरश्वमेधस्याश्वसंरक्षणपरेण चन्द्रकेतुना लवस्य स्नेहानुगत वीरोचितालापकलापविलसितं, समरोद्योगश्च।

षष्ठे—चन्द्रकेतुलवयोर्युद्धम्, रामसमागमे चाहवप्रशान्तिः, कुश लवयोः समागमे च रामस्य तयोरवलोकनेनात्मजस्नेहाविर्भावः।

सप्तमे—महर्षेर्वाल्मीकेराज्ञयाप्सरसां रामायणनाटकाभिनयस्तत्पश्यतो रामस्य निरतिशयक्लेशोत्कोटिकः, पृथ्वीभागिरथीप्रसादात् निवृत्तापवादायाः जनकनन्दिन्याः समागमश्च सुष्ठु वर्णितमेवास्ते।

**नायकादिसिद्धान्तः**—एतन्नाटकस्य नायको रामचन्द्रो धीरोदात्तः, नायिका सीतादेवो स्वकीया मुग्धा चालम्बनविभावौ, रमणीयवस्तुदर्शनादीन्युद्दीपनविभावाः, मोहविलापादयोऽनुभावाः, विषादादयो व्यभिचारिणः, रतिः स्थायी, करुणविप्रलम्भाख्यः शृङ्गाररसोऽङ्गी, वीरादयोऽङ्गरसाः, रीतिः पाञ्चाली, गुणो माधुर्याख्यः, प्रस्तावना प्रयोगातिशयरूपा इति।

---

## शिशुपालवधसमालोचनम्—

अस्ति किल संस्कृतभाषानिबन्धेषु शिशुपालवधं नाम महाकाव्यं परमरमणीयम्। एतत् काव्यं कविवरिष्ठेन श्रीमता

माघेन कविना निर्म्मितम्। स खलु माघः श्रीधर्म्मनाभस्य राज्ञः समस्तकरणाधीश्वरस्य प्रधानामात्यस्य सुप्रभदेवस्य नप्ता, श्रीदत्तकस्य सूनुः गुर्ज्जरदेशमलंकृत्य प्रादुरासीदिति पुरातनतत्त्वान्वेषिणां कतिपयः कृतीनां मतम्।

तस्य कवेः श्लोकस्तु प्राचीनालङ्कारिकस्य तत्रभवतो मम्मठभट्टस्य कृतौ काव्यप्रकाशे उत्कीर्णतया मम्मठभट्टस्यापि पूर्व्वतनकाल एव कवेर्ज्जन्मसमय इति तेषां सिद्धान्तः। मम्मठभट्टस्य जीवनकालो हि ख्रीष्टीयैकादशशताब्द्यां, सुतरां माघकवेरुत्पत्तिस्तु तत्पूर्व्वस्यां नवमशताब्द्यामुत दशमशताब्द्यां वेति प्रत्नतत्त्ववेदिनामनुमानम्।

यातु तावन्महाकविरयं यत्र देशे यस्मिन् समये जन्म परिगृह्य वा यत्कुलमलमकार्षीत्, अलं तदालोचनया, स हि कविशिरोमणिः शिशुपालवधं नाम महाकाव्यं प्रणीय कविकुलेषु अमरत्वमलभत इति सर्व्वथा वितर्कविरहितं वचः।

काव्येऽस्मिन् यत् कठोरपदोपन्यासेन रचनागौरवं प्रकटितं तत्रभवता कविना; तद्धि तस्य कृतौ शशिनो लाञ्छनमिव, कियान्दोषः प्रसूयते समालोचककुशलैः। तथैवैकस्य सुरम्यपदविन्यासानुरोधेन एकैकशः श्लोकं निर्म्माय अप्रस्तुतवर्णनया च काव्यस्यैतस्य प्रायेणार्द्धाङ्गमेव पुष्कलत्वं नीतम्। तेन च यद्दोषजुष्टं परिगण्यते, तच्च सोढ़व्यं सर्व्वथा सज्जनानाम्। नूनं तदन्तरितं चेत् काव्यमार्गस्य शीर्षमलमकरिष्यत् शिशुपालवधं नामेति कः सन्देहावसरस्तत्र? अपि तु गभीरतरपदयोजनया

दिशा तथा अर्थगौरवेण मञ्जुलतालङ्कृतोपमाद्यलङ्कारनिवहेन च रमणीयमेवं तत् सुरसपूर्णं विद्वज्जनगणमानसानन्दकरम्। एवं वासुदेवोद्धवरामाणां कर्त्तव्यमन्त्रणामिषेण परमा नीतिरालम्बिता। परन्तु भगवतो वासुदेवस्येन्द्रप्रस्थप्रयाणे गिरिनदी-प्रभातादिचित्र-चित्रितेन अनन्यसुलभकवित्वप्रतिभोन्मेषिता कविना।

"उपमा कालिदासस्य भारवेरर्थगौरवम्।
नैषधे पदलालित्यं माघे सन्ति त्रयो गुणाः॥"

इति यत् कविभिर्माघकाव्यं प्रशस्यते, तत्तु तस्यापरिमेय-कवित्वशक्तेर्महान् दृष्टान्तः। परं तदमूलमतिरञ्जितं वा वक्तुं न प्रभवन्ति सन्तः। अन्यच्च भारविपदमनुगच्छतोऽस्य कृतिरिति कवितागतसौसादृश्येनानुमीयते यद्विद्भिस्तदत्र कतिपयानि तथाविधानि सादृश्यानि प्रदर्श्यन्ते—

भारविकृतौ किरातार्ज्जुनीये महर्षिर्वेदव्यासः पाण्डवानां समीपमागत्य कर्त्तव्यमादिदेश; शिशुपालवधे च देवर्षिर्नारदः केशवान्तिकमुपेत्य कृत्यवस्तु प्रस्तावयामास। किरातार्ज्जुनीये युधिष्ठिरादीनां यादृशी राजनीतिर्वर्णिता, शिशुपालवधेऽपि कृष्णबलरामोद्धवानां तादृशी नीतिः समालोचिता।

किरातार्ज्जुनीये प्रख्यातवीर्य्यशालिनोऽर्ज्जुनस्य तपश्चरणार्थमिन्द्रकीलावस्थितिः, शिशुपालवधेऽपि हरिप्रस्थप्रस्थितस्य हरेरैवतकशिलोच्चयाधिवासः। एकत्र यमकालङ्कृतैः श्लोकैर्हिमालयस्य विपुलैश्वर्य्यवर्णनम्, अन्यत्र च तदलङ्कारसहकृतैस्तच्छन्दोबन्धैश्च रैवतकस्य च तादृगेव वर्णना। एकत्र सुररमणीर्मा

वनविहारजलकेलि-नायकागमनविरहादीनां मधुस्यन्दनी रचना ; अन्यत्र च तत् सर्व्वमेवानुपूर्व्वमवतिष्ठते ।

किरातार्ज्जुनीये किरातपतिः पार्थमुत्तेजयितुं दूतं प्रेरितवान्, शिशुपालवधेऽपि भगवतो वासुदेवस्य भर्त्सनार्थं चेदिपतिर्दूतं प्रेरयति स्म । एकत्र पञ्चदशसर्गे एकाक्षर-द्व्यक्षर-यमकालंकृतैः श्लोकैः समरवर्णना ; अन्यत्रोनविंशसर्गे तथालङ्कृतैस्तच्छन्दोवन्धैश्च युद्धवर्णना, किरातार्ज्जुनीये कविना—'श्रियः कुरूणाम्' इत्यादिना श्रीशब्दोपादानेन मङ्गलमाचरितम्, शिशुपालवधेऽपि कविः—'श्रियःपतिः' इत्यादिना तस्यैव शरणीमनुकृतवान् । तथान्तश्लोके प्रतिसर्गस्य कविना किरातार्ज्जुनीये लक्ष्मीशब्दप्रयोगेण यन्मङ्गलमाचरितम्, माघेनापि तत्र तत्र तथानुष्ठितम् ।

तथा च किराते—'ततः शरच्चन्द्रकराभिरामैः' इत्यादि 'श्रियं विकर्षत्यपहन्त्यवानि' इत्यादि 'निरास्थ्र प्रश्नकुतूहलित्वम्' इत्यादि 'अनुभावजता गुरुस्थिरत्वात्' इत्यादि । माघे च—'दधानमम्भोरुहकेशरद्युतीः' इत्यादि 'हरत्यघं सम्प्रति हेतुरेष्यतः' इत्यादि 'गतस्पृहोऽप्यागमनप्रयोजनम्' इत्यादि 'न नीतमन्येन नतिं कदाचित्' इत्यमन्योऽन्यानि प्रभूतानि सन्ति सादृश्यानि नेहोक्तानि विस्तरभयादिति ।

परन्तु माघो भारवेः पदपङ्क्तिमनुसृतोऽपि दार्शनिकत्वात् भारवितस्तस्य गरीय इति बहुभिः समालोचनविशाललोचनैर्विद्वद्भिर्विभाव्यते । भारविकृतौ विरलैव दार्शनिकी कथा । माघप्रबन्धे

तु सांख्योत्तरमीमांसापातञ्जलदर्शनानां तथा बौद्धदर्शनस्य च नानाकथाः श्रूयन्ते ।

भारविकवेः काव्यं निसर्गशोभासुन्दरम्। माघस्य तु गभीर-गवेषणायास-सफलीकृतमिव काव्यहृदयमित्यलं पल्लवितेन।

**संक्षिप्तेतिवृत्तम्**—अस्य हि प्रथमे सर्गे—देवर्षि-नारदस्य द्वारकायां श्रीकृष्णसमीपागमनम्, तत्र श्रीकृष्णनारदयोः कथोपकथनम्, कृष्णाय महेन्द्रानुरुद्धस्य देवर्षेः शिशुपालोपद्रव-कीर्त्तनार्थमेव आगमनख्यापनम्, कृष्णस्य च तद्विनाशा-ङ्गीकारश्च।

द्वितीये—कृष्णस्य रामोद्धवाभ्यां स्वकर्त्तव्यनिरूपणम् ;

तृतीये—इन्द्रप्रस्थयात्रा ।

चतुर्थे—रैवतकसम्पद्वर्णनम् ।

पञ्चमे—रैवतकावस्थानम् ।

षष्ठे—ऋतुसम्पातः ।

सप्तमे—तरुणतरुणीनां वनकेलिः ।

अष्टमे—तासामुदकक्रीड़ा ।

नवमे—सायाह्नसुषमा ।

दशमे—सुरतविलासः ।

एकादशे—प्रातःश्रीः ।

द्वादशे—रैवतकं विहाय इन्द्रप्रस्थं प्रति हरेर्गमनम्, यमुना-तरणञ्च ।

त्रयोदशे—युधिष्ठिरादिभिस्तस्य समागमः ।

चतुर्दशे—पाण्डवयज्ञक्रियाकलापः, अर्घ्यदानावसरे भीष्म-हितकथनेन केशवायार्घ्यदानञ्च।

पञ्चदशे—दोषैकदृशा चेदिपतिनाभिहितः कृष्णभीष्मपाण्डवानामधिक्षेपः, शिशुपालं प्रति भीष्मस्य गुरुगम्भीरं सदर्पवचनम्, युद्धोद्योगार्थमेव चेदिपतिप्रभृतीनां तत्स्थानतो निर्गमनञ्च।

षोड़शे—शिशुपालसन्देशहरवर्णितं ललितपौरुषोभयार्थद्योतकवचनम्, सात्यकिनाभिहितं तदुत्तरम्, भूय एव दूतोक्तिं प्रतिपद्य तर्जितञ्च।

सप्तदशे—यदुवंशीयानां सैन्योद्योगसंरम्भादिचेष्टा।

अष्टादशे—युद्धप्रकारः।

ऊनविंशे—विविधबन्धैः स एव।

विंशे—चेदिपतिशासनादिवर्णितमिति संक्षेपः।

**नायकादिसिद्धान्तः**—अस्य खलु शिशुपालवधाख्य-महाकाव्यस्य श्रीकृष्णो नायको धीरोदात्तः, प्रतिनायकः धीरोद्धतः शिशुपालश्चालम्बणविभावौ। आत्मवाक्यानि तथा दूतव्याहृतानि च शिशुपालवचनादीन्युद्दीपनविभावाः, धृत्यादयो व्यभिचारिणः, उत्साहः स्थायी, वीररसोऽङ्गी, अङ्गरसाः शृङ्गारादयः, रीतिः गौड़ी, ओजोनामगुणः, चेदिपतिप्रेरितसन्देशहरो निसृष्टार्थः इति।

———

## नैषधचरितसमालोचनम्—

नैषधचरितं नाम महाकाव्यं चिन्तामणिमन्त्रोपासकेन पण्डितश्रीहीरसूनुना श्रीमता श्रीहर्षेण कविना प्रणीतम्। अयमेव कविः खीष्टत्रयोदशशताब्द्याः प्रारम्भे प्रादुर्भूय कालेन वारानसी-नरेशस्य राज्ञो जयचन्द्रस्य परिषदि मुख्यविपश्चितः पदमलभत। तेन कविना प्रथमत एव खण्डनखण्डखाद्यं नाम परमरमणीयं वेदान्तपदार्थघटितं सूक्ष्मविचारपद्धतिशुद्धं दार्शनिकभावनिबद्धं प्रकरणं प्रणीय राज्ञे उपायनीकृतम्। स भूपतिस्तदधीत्य निरतिशयां प्रीतिमनुभवन् कमपि काव्यग्रन्थं निर्म्मातुं तमेव कविमनुरुरोध।

ततो राजप्रसादमनुभुञ्जमानेन कविना उत्तरत एतल्ललि-तपदावलीसमालिङ्गितं शब्दालङ्कारबाहुल्यतया श्रुतिमधुरञ्च काव्यं निर्म्माय तस्य राज्ञो मनस्तुष्टिरकारि। एतच्च काव्यं श्रीमन्महाभारतस्य वनपर्व्वान्तर्गतं निषधदेशाधिपतेः पुण्यश्लोकस्य नलस्य विदर्भराजनन्दिन्याः सतीकुलललामभूतायाः दमयन्त्याः पाणिग्रहणादिवृत्तघटितम्।

अत्र चार्थालङ्काराणामतिशयोक्त्यादयः कतिपयेऽलङ्काराः बाहुल्येनावतिष्ठन्ते। इह तावत् नगनगरवापीतडागारामजनपदा-दीनां दमयन्तीनलयोर्धैर्य्यमाधुर्य्यगाम्भीर्य्यशपथस्थैर्य्यसारल्या-दीनामप्यतिशयवर्णनावसरे, सुललितपदोपस्थापितमतिनैपुण्यम् अद्भुतभावविकाशपाटवं, हंसादीनामुक्तिप्रत्युक्तौ अनन्यसाधारणं वाक्पाटवञ्चातिशोभनं प्रकटितम्।

अयमेव ग्रन्थः अभिनवभावसद्भावात् मधुरपदसन्निबन्धाच्चाच्च-पादपद्मोपजीविभिस्तार्किकमुख्यैरतिमात्रं प्रशस्यते, बहु मन्यते च तैरन्यमहाकविप्रबन्धतः। किन्तु भारवि-माघकाव्ययोरधःस्तरे प्रतिष्ठाप्यते अलङ्कारशास्त्रोक्तदोषदूषणादिकारणतया काव्यरस-रसिकैः सहृदयै रेवातितराम्। वर्त्तते तावदेतत्सम्बन्धिनी कापि जनश्रुतिः—

'काव्यस्यास्य रचयिता श्रीमान् श्रीहर्षः एतदेव काव्यं निर्म्माय स्वमातुलाय काव्यप्रकाशनिर्म्मात्रे मम्मटभट्टाय पर्य्यालो-चयितुं पर्य्यर्पयत्। स तु ग्रन्थमिममाद्योपान्तमवलोक्य तमक-थयत्—'अयि वत्सक, यद्येतत् किञ्चित् पूर्वं मदीयकरतल-गतमभविष्यत्, तर्हि प्रभूतमेव मे श्रमलाघवमजनिष्यत्। यतो हि मया विपुलायासेन दुरवगाह्यकाव्यनीरधिं समवगाह्य मद्विर-चितालङ्कारग्रन्थस्यान्तर्गतदोषपरिच्छेदस्य उदाहरणानुग्रथितानि तानि चैकत्र त्वत्काव्ये अकृच्छ्रलभ्यानि' इति।

वस्तुतस्तु ग्रन्थस्यास्यालङ्कारिकदोषाधिक्येन महाकवेर्भारवे-र्माघस्य च प्रबन्धतः किञ्चिदपकर्षं समालोचयन्ति काव्यसमा-लोचनकुशलाः। किन्तु तथापि आमनन्ति ते मुक्तकण्ठं यदेतस्य रचनापद्धतिरभिनवा, रचनाविधौ च कविना कस्यापि पूर्व्वतनस्य कवेर्भावनिवहादर्शो न समग्राहि।

एष हि ग्रन्थोऽनुपदमेव श्रुतिमधुरपदसद्भावेन प्रणयति काव्य-मार्गसंशीलयतोऽतिमात्रमानन्दम्। तथा दमयन्तीनलयोः पुण्यमयकथाकीर्त्तनेन कविरसाधारणात्मशक्तिं स्फूटीकृत्य

दार्शनिकभावसंश्लिष्टकाव्यपीयूषधारया समाप्लावयति भृशं विपश्चितां मानसचेत्रम्। यस्याः सद्गुणनिवहवशीभूतानि सतीकुलानि। नामधेयानि यस्याः शिथिलपुण्यकलामभिप्रसूय हृदयादपसारयति कलङ्करेखाम्। या विमुग्धविवेकेन कलिप्रभावप्रतिहततेजसा महाराजनलेन विसर्जिता कान्तारे कठोरभावमुपगत्य पातिव्रत्यविध्वंसनार्थमुपसर्पतो व्याधान् पातिव्रत्यानलेन भृशं ज्वलता प्रददाह। पुनः पातिव्रत्यबलेनैव इतराभिरनाकलितेन शुभमयम् आनन्दमयम् पुण्यमयञ्च पतिसमागमं समालब्धवती। तस्याः प्रसङ्गमतिरमणीयपदनिवहोपस्थापनेन जगतां शिक्षणीयतां नयन् नितरां विजयते कविः काव्यदिशात्र जगति, किं तत्र विकल्पावसर इत्यलं दमयन्तीनलसम्वादसंवाहिन्या गौरविन्या गिरा।

संक्षिप्तेतिवृत्तम्—अस्य तावत् प्रथमे सर्गे—निषधाधिपतेर्नलस्य गुणकीर्त्तनम्। अधिगतदमयन्तीगुणविमुग्धस्य तस्य भावविकारः, प्रमोदवनगमनम्, तस्मिन् तेन हंसस्य धारणम्, तस्माच्च करुणपरिदेविनो हंसस्य परित्यागः।

द्वितीये—हंसमुखात् नलस्य विदर्भराजनन्दिन्याः दमयन्त्याः रूपवर्णनश्रवणम्, हंसस्य कुण्डिनपुरप्रेषणञ्च।

तृतीये—भैमीहंससम्वादः, हंसमुखात् तस्या नलरूपगुणाकर्णनम्, तस्मिन् राजनि भावाभिनिवेशश्च।

चतुर्थे—दमयन्त्याः विरहविकारः, तस्याः जनयितुर्भीमस्य तदवगतिः।

पञ्चमे—दमयन्त्याः स्वयम्बरोद्योगः, इन्द्रनारदसंवादः, नारदमुखान्महेन्द्रस्य स्वयम्बरसंवादाधिगतिः, निसर्गसुन्दरीं भैमीमभिवाञ्छतां पुरन्दरानलयमवरुणानां कुण्डिनपुरयात्रा, अध्वनि नलसमागमः, तस्य च देवदौत्यग्रहणम्, इन्द्रात् तिरस्करणीविद्याधिगतिश्च ।

षष्ठे—नलस्य भीमराजसदनप्रवेशः, दमयन्तीक्षणञ्च ।

सप्तमे—भैम्या अलौकिकरूपसम्पद्‌ वर्णनम् ।

अष्टमे—नलरूपातिशयः, तस्य दिगीशसन्देशकथनञ्च ।

नवमे—नलदमयन्तीसंवादः, अन्योऽन्यं रागादयश्च ।

दशमे—स्वयम्बरवृत्तान्तवर्णनं, स्वयम्बरसभां द्रष्टुमाखण्डलस्य यमस्य अग्नेर्वरुणस्य चागमनम्, अपरेषां नैर्ऋत्यादीनां दिक्पतीनां तत्रानागमने हेतुकथनम्, दमयन्तीवर्णनञ्च ।

एकादशे—स्वयम्वरसभास्थानां राजन्यादीनां वर्णनम्, शाकद्वीपादीनां वर्णनं, काशीवर्णनञ्च ।

द्वादशे—दमयन्त्या अलीकनलसाक्षात्कारादिवर्णनम् ।

त्रयोदशे—लोकपालानां नलस्य च वर्णनम् ।

चतुर्दशे—स्वयम्बरम्, दमयन्त्याः दिक्पालेभ्यो नलस्याभिज्ञानाधिगतिः, देवतानां नलाय वरप्रदानञ्च ।

पञ्चदशे—विदर्भराजेन नलानयनार्थं दूतप्रेषणम्, दूतमुखात् भीमवचनाकर्णितेन नलेन तद्दर्शनाय गमनप्रतिश्रुतिः, दूताय पारितोषिकदानं, दमयन्तीनलयोः पुरस्त्रीणाञ्च प्रसाधनं, तासां नलदर्शनौत्सुक्यवर्णनञ्च ।

षोड़शे—विदर्भराजेन नलसम्भाषणं, नलाय वैदर्भीसम्प्रदानं, यौतुकदानं, नलस्य स्वपुरगमनञ्च ।

सप्तदशे—इन्द्रादीनां द्युलोकगमनसमये पथिस्थितमेघादीनां वर्णनम्, कामादीनां स्वरूपकथनम्, प्रसङ्गतो बौद्धचार्वाकादीनां मतकीर्त्तनम्, तन्त्रादिशास्त्रक्रियया मुक्तिमार्गानुसन्धित्सूनां विरिञ्चयादिदेवोपासकानाञ्च मुक्तेर्दुर्घटत्वख्यापनम्, चार्वाकादीनां मतदूषणञ्च, इन्द्रस्य कलिसाक्षात्कारः, कलेर्निषधावस्थितिश्च ।

अष्टादशे—भैमीनलयोः सम्भोगसौधविभूतिकीर्त्तनम्, तयोः विहारप्रकारकथनञ्च ।

ऊनविंशे—प्रभातवर्णनम् ।

विंशे—दमयन्तीनलयोरन्योऽन्यं रागाभिव्यञ्जकाख्यानम्, दमयन्तीसख्या कलया नलस्योक्तिप्रत्युक्तिः, वैतालिक्या मध्याह्नसमयवर्णनञ्च ।

एकविंशे—नलस्य पूजागृहवर्णनम्, तत्रत्यानामुपचाराणां तथा सूर्य्यस्य गिरिजापतेः विष्णोर्दशमूर्त्तेश्च वर्णनम् । नलेन दमयन्त्याः अभिभाषणम्, सायन्तनविधिविधित्सोर्नलस्य वहिर्गमनञ्च ।

द्वाविंशे—सायंकालवर्णनम्, तमोवर्णनम्, तद्वर्णननिषेण पुनर्बौद्धमतं कणादमतञ्चाख्यापनम्, चन्द्रोदयस्य तथा चन्द्रस्य च वर्णनमितिसर्ग-संक्षेपः ।

**नायकादिसिद्धान्तः**—एतस्य नायको नलो धीरोदात्तः, नायिका च दमयन्ती स्वकीया मुग्धालम्बनविभावौ, अन्योऽन्यचक्षुरादिक्रिया अनुभावाः निर्व्वेदादयो व्यभिचारिणः, हंसमुखोच्च-

सितानि परस्परोच्चरितानि वाक्यानि कुसुम-चन्द्र-चन्दन-वसन्ता-दयश्चोद्दीपनविभावाः, रतिः स्थायी, शृङ्गाररसोऽङ्गी, स च प्रथम-सर्गादारभ्य सप्तदशसर्गान्तं यावत् विप्रलम्भस्य पूर्वरागाख्योभेदः। तत्परं सम्भोगशृङ्गारः, करुणादयश्चाङ्गरसाः, रीतिः वैदर्भी, गुणो-माधुर्य्याख्यः, दूतोहंसो निसृष्टार्थः इति।

---

## कादम्बरीसमालोचनम् —

अधुना प्रचलितकाव्यनिवहेषु कादम्बरीनाम गद्यकाव्य-मतिहृद्यं सहृदयानाम्। इदं तावत् कविकुलभूषणाचार्य्येण श्रीमता वाणभट्टेन विरचितम्। स खलु वाणः शोणनदस्य पाश्चात्ये रोधसि प्रीतिकुटपदे वात्सायनान्वयजननस्य चित्रभा-नोरौरसेन राजदेव्या जठरे निखिलकवित्वशक्तिमुपचीय समजनि।

तस्य बाल्य वयसि परलोकमुपरतायां जनन्यां जनक एव जननीनिर्विशेषेण तमतिमात्रं पुपोष। ततो विधातृविधानेन चतुर्द्दशे वर्षे वाणे जनकश्चित्रभानुरपि त्रिदशपुरमयात्। तेन स परमनिर्वेदमालभमानः पितृवियोगदुःखविदूनमानसः कतिचित् दिनानि स्वगृहे उषित्वा 'दुर्म्मनायमानस्य मे देशाटन-मेव विधेयम्' इति विमृश्य तदर्थं गृहतो बहिरगात्। ततस्तेन गच्छति काले गिरि-नदी-निर्झरादीनां परमरमणीयां निसर्गजां शोभां जनपदनगरीणाञ्च सञ्चीयमानां श्रियमवेच्य महत्या आत्म-कवित्वशक्तेरनुकूलोपादानानां परमसंग्रहः समकारि। ततः कतिचित् तियावुपचिति तमात्मभवनमागतमवगम्य तद्वयशो-

विमुग्धो राजा हर्षदेवः मेखलनामानं सन्देशहरं प्रेरयित्वा स्वगृहमानीय स्वसंसदमलमकार्षीत् ।

ततःप्रभृति तत्रैव निवसन्नमन्दानन्दसन्दोहदं सकलसुधीजनमानसमरालं कादम्बरीनाम कथाग्रन्थं हर्षचरितं, शार्दूलविक्रीडितछन्दोपबद्धदेवीमाहात्म्यात्मकं चण्डिकाशतकं पार्वतीपरिनयनाटकञ्च विरच्यासरत्वमलभत। तत् कवित्वोन्मेषितायां परमसहाय एव हर्षदेवः खृीष्टीयसप्तमशताब्द्या मध्यभागे कान्यकुब्जस्य सिंहासनमलमकार्षीत्। नितरां कवेरपि स एव प्रादुर्भावसमयः।

यातु, कविरयं यत्र देशे यस्मिन् काले जननमभिगृह्य यदन्वयमलमकरोत्, कृतं तद्गवेषणया तस्यानवद्यगद्यविरचितोऽयं ग्रन्थः सुवर्णसमलङ्कृतया अभिनवरसभरोद्भिन्नया भारत्या समालिङ्गितोऽनुत्तमात्मसौभाग्येनोपलक्षितो विचरति धरणीतले। इमां गुणाढ्यप्रणीतपैशाचभाषामय्या बृहत्कथायाः कथामवलम्ब्य प्रणिनाय। अत्र च शूद्रक-वैशम्पायन-हारीत-जाबालि-पुण्डरीक-कपिञ्जल-चन्द्रापीड़-महाश्वेता-श्वेतकेतु-कादम्बरी-चित्ररथ-हंस-गौरी-मदिराप्रभृतीनामन्योऽन्यव्यवहारादिवर्णनमिषेण गन्धर्वाणामागमोक्तचतुर्दशकुलानामकृत्रिमानां प्रेमस्नेहादीनामव्याहतगतेर्भगवतः कुसुमायुधस्य शासनानाञ्चालोकसामान्यया रसवत्या वर्णनया कवेरत्यद्भुतायाः कवित्वप्रतिभाया अनन्यसाधारणीं शक्तिमवतारयामास। तथा च सुहृत्प्रेम्नः परमकाष्ठामलङ्काराणाञ्च निरतिशयसमावेशमनुपदमेव संलभ-

सितानि परस्परोच्चरितानि वाक्यानि कुसुम-चन्द्र-चन्दन-वसन्ता-दयश्चोद्दीपनविभावाः, रतिः स्थायी, शृङ्गाररसोऽङ्गी, स च प्रथम-सर्गादारभ्य सप्तदशसर्गान्तं यावत् विप्रलम्भस्य पूर्वरागाख्योभेदः। तत्परं सम्भोगशृङ्गारः, करुणादयश्चाङ्गरसाः, रीतिः वैदर्भी, गुणो-माधुर्याख्यः, दूतोहंसो निसृष्टार्थः इति।

---

## कादम्बरीसमालोचनम् —

अधुना प्रचलितकाव्यनिवहेषु कादम्बरीनाम गद्यकाव्य-मतिहृद्यं सहृदयानाम्। इदं तावत् कविकुलभूषणाचार्य्येण श्रीमता वाणभट्टेन विरचितम्। स खलु वाणः शोणनदस्य पाश्चात्ये रोधसि प्रीतिकुटपदे वात्सायनान्वयजननस्य चित्रभा-नोरौरसेन राजदेव्या जठरे निखिलकवित्वशक्तिमुपचीय समजनि।

तस्य बाल्ये वयसि परलोकमुपरतायां जनन्यां जनक एव जननीनिर्विशेषेण तमतिमात्रं पुपोष। ततो विधातृविधानेन चतुर्दशे वर्षे वाणे जनकश्चित्रभानुरपि त्रिदशपुरमयात्। तेन स परमनिर्वेदमालभमानः पितृवियोगदुःखविदूनमानसः कतिचित् दिनानि स्वगृहे उषित्वा 'दुर्मनायमानस्य मे देशाटन-मेव विधेयम्' इति विमृष्य तदर्थं गृहतो बहिरगात्। ततस्तेन गच्छति काले गिरि-नदी-निर्झरादीनां परमरमणीयां निसर्गजां शोभां जनपदनगरीणाञ्च सञ्चीयमानां श्रियमवेक्ष्य महत्या आत्म-कवित्वशक्तेरनुकूलोपादानानां परमसंग्रहः समकारि। ततः कतिचित् तिथावुपचिते तमात्मभवनमागतमवगम्य तद्यशो-

विमुग्धो राजा हर्षदेवः मेखलनामानं सन्देशहरं प्रेरयित्वा स्वगृहमानीय स्वसंसदमलमकार्षीत् ।

ततःप्रभृति तत्रैव निवसन्नमन्दानन्दसन्दोहदं सकलसुधीजनमानसमरालं कादम्बरीनाम कथाग्रन्थं हर्षचरितं, शार्दूलविक्रीड़ितच्छन्दोपबद्धदेवीमाहात्म्यात्मकं चण्डिकाशतकं पार्वतीपरिनयनाटकञ्च विरच्यामरत्वमलभत। तत् कवित्वोन्मेषितायां परमसहाय एव हर्षदेवः खृीष्टीयसप्तमशताब्द्या मध्यभागे काव्यकुञ्जस्य सिंहासनमलमकार्षीत्। नितरां कवेरपि स एव प्रादुर्भावसमयः ।

यातु, कविरयं यत्र देशे यस्मिन् काले जननमभिगृह्य यदन्वयमलमकरोत्, कृतं तद्गवेषणया तस्यानवद्यगद्यविरचितोऽयं ग्रन्थः सुवर्णसमलङ्कृतया अभिनवरसभरोद्भिन्नया भारत्या समालिङ्गितोऽनुत्तमात्मसौभाग्येनोपलक्षितो विचरति धरणीतले। इमां गुणाढ्यप्रणीतपैशाचभाषामय्या बृहत्कथायाः कथामवलम्ब्य प्रणिनाय। अत्र च शूद्रक-वैशम्पायन-हारीत-जावालिपुण्डरीक-कपिञ्जल-चन्द्रापीड़-महाश्वेता-श्वेतकेतु-कादम्बरीचित्ररथ-हंस-गौरी-मदिराप्रभृतीनामन्योऽन्यव्यवहारादिवर्णनमिषेण गन्धर्वाणामागमोक्तचतुर्दशकुलानामकृत्रिमानां प्रेमस्नेहादीनामव्याहतगतेर्भगवतः कुसुमायुधस्य शासनानाञ्चालोकसामान्यया रसवत्या वर्णनया कविरत्यद्भुतायाः कवित्वप्रतिभाया अनन्यसाधारणीं शक्तिमवतारयामास। तथा च सुहृत्प्रेम्णः परमकाष्ठामलङ्काराणाञ्च निरतिशयसमावेशमनुपदमेव संलभ-

महे। एतस्याः कथाया अभिनवेन भावेन केषां न सहृदयानां हृदयमाह्लादकल्लोलिन्यामतिमात्रं नाप्लाव्यते। केषां न वा सुखयन्ति आप्याययन्ते च वर्णयोजनस्थितिगतिरीतिपद्धतयः। तथा चातिमात्रमधुरं शुकनासोपदेशमधीयानैः का नाम नीतिर्दुर्लभा ? दुःशीलायाः स्वभावलोलायाः स्त्रियः वारवनिताया इवासद्वृत्तकथनेन च विद्यासाफल्यमेव कविमुख्येन प्रतिपादितम्।

किं बहुना गीर्वाणवाणीं परिसंशीलयतोऽतिमात्रमेतस्याः प्रत्येकांश एव मोहयत्यत्र जगति।

हन्त! किं नाम दुर्भाग्यं सारस्वतमन्दिराधिष्ठितानां साहित्यालङ्कारशास्त्रनिसेविनां, यदेतस्याः निरवद्यायाः कथायाः पर्य्यवसानमन्तरा कविस्त्रिदशपुरमभिययौ।

परतस्तदवशिष्टांशस्तु तदङ्गजेन पितृपदपङ्क्तिमनुसृत्य नानाभावादिकाव्यगुणनिचयेन निर्म्मातुं परमयत्नोऽकारि। किन्तु जनकसदृशी रचनाशक्तिस्तस्य नासीत्; अत्र तु तदधीयाना आचार्य्यवर्य्या एव प्रमाणम्। तथा च तत् कथायाः आदिमांशपाठेन यावन्ति सुखान्याददते लोकाः न तथापरांशपाठेन। इत्यास्तां विस्तृतिः काजम्बरीकथासमालोचनप्रसङ्गेषु।

**संक्षिप्तेतिवृत्तम्**—एतस्मिंस्तावत् काव्यकथामुखे प्रथमतो राज्ञः शूद्रकोपाख्यानम्, तस्य रूपवर्णनञ्च। तत्समीपे चाण्डालपुत्र्याः शुकानयनम्, शुकशूद्रकसंवादः, शुकस्यात्मवृत्तान्तादिकथनप्रसङ्गे जावालिना समागमः, जावालेः शुक-

प्राक्तनजन्मकथारम्भश्च ; कथारम्भे तु नृपतेस्तारापीड़स्य तदामात्यस्य शुकनाशस्य च सुतोत्पत्तिः, चन्द्रापीड़-वैशम्पायननाम्नोश्च, तयोर्विद्याभ्यासः, शुकनासादुपदेशोपलब्धिः, दिग्विजयप्रयाणम्, चन्द्रापीड़स्य किन्नरमिथुनानुसरणम्, अच्छोदसरोवर्णनम्, तत्र महाश्वेतया संलापश्च, महाश्वेताकथाप्रसङ्गे तु तस्याः विरहेण पुण्डरीकस्य मरणम्, तद्देहस्य च सोमलोकाधिगतिः, कपिञ्जलस्य तदनुसरणम्, सिद्धपुरुषसमाश्वासनमवगम्य महाश्वेतायाः यत्याचारपरिग्रहश्च। चन्द्रापीड़स्य कादम्बरीसमागमः, परस्परावलोकनविमुग्धयोस्तयोः कादम्बरीचन्द्रापीड़योः भावाभिव्यक्तिः, कादम्बर्य्याः विरहः, पत्रलेखायाः सविधे कादम्बर्य्याः खेदोक्तिरित्यादि सुष्ठु वर्णितम्।

अपरांशे तु महाश्वेतायाः सौन्दर्य्यविमुग्धस्य वैशम्पायनस्य तदभिशापेन पञ्चत्वप्राप्तिः, शुकयोनिसमागतिश्च तदुपश्रुत्य चन्द्रापीड़स्यापि मरणम् ; अशरीरिणीवाणीसमाश्वासितायाः कादम्बर्य्याः अपि ब्रह्मचर्य्यावलम्बनम्, कपिञ्जलप्रत्यागतिरिति जावालेः कथोपसंहरणम्, पुण्डरीकचन्द्रापीड़ावतारभूतयोः शुकशूद्रकयोरनलप्रवेशः, चन्द्रापीड़स्योज्जीवनम्, चन्द्रलोकतः पुण्डरीकस्याधिगमः, तयोश्च स्वस्ववल्लभाधिप्राप्तिः, आत्मनिलयगमनञ्च वर्णितमित्यलमधिकवाक्योपन्यासेन।

**नायकादिसिद्धान्तः**—अस्याः खलु नायकश्चन्द्रापीड़ो धीरोदात्तः, नायिका च कादम्बरी स्वकीया मुग्धालम्बनविभावौ, इन्दु-चन्दनान्योऽन्योक्तादयः उद्दीपनविभावाः, परस्परचक्षुरादि-

क्रिया अनुभावाः, निर्वेदप्रभृतयो व्यभिचारिभावाः, रतिः स्थायी, करुणविप्रलम्भाख्यशृङ्गाररसोऽङ्गी, करुणादयोऽङ्गरसाः, रीतिर्गौड़ी गुणो माधुर्य्याख्यः, गद्यमुत्कलिकाप्रायमिति ॥

---

## मेघदूतसमालोचनम्—

मेघदूतं नाम खण्डकाव्यं श्रीमन्महाकवेः कालिदासस्य निरवद्याया लेखन्या मुखनिःसृतम्। बहुशः प्रशंसन्ते काव्यमिदं सर्व्वसम्प्रदायानां संस्कृतभाषाविदः काव्यरसरसिकाः। वर्त्तते तत्र काचिदत्युत्कृष्टतमा नवीनता, यया वैदेशिकज्ञानवृद्धाः पाश्चात्यसभ्या अपि परमानन्दधारामधिगच्छन्तः कथयन्ति, यत् कालिदास एव कवीनामुपरिचरः सेक्सपीयरसमानतामवाध-मविवादमधिगच्छतीति।

इदं तावत् सर्गद्वयघटितमतिसुन्दरं परमहृद्यञ्च। अस्य खलु रसः शृङ्गारः, रचना मन्दाक्रान्तावृत्तघटिता नितान्तमानन्द-मुत्पादयति। सुस्थानकल्पितयतिविन्यासैः परस्परैर्मैत्र्युपग-तैरिव वर्णैः समुचितनिर्भररसनम्र इव मन्दं मन्दं नुदति भावधारामेकैकशः श्लोकः। तथाहि—

"मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम्
वामश्चायं नदति मधुरं चातकस्ते सगन्धः।
गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः,
सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः॥"

इति श्लोकेन काव्यगुणान् कविः स्वयमेव प्रकटयति। यथा—

'मन्दं मन्दं नुदती'त्यनेन मृदुवर्णनाप्राशस्त्यम्, 'अनुकूलः' इत्यनेन पदानां मेलाभावं, 'नदती' त्यनेन ध्वनियुक्तत्वं 'मधुर'-मित्यनेन द्राक्षापाकवत्त्वं, 'सगन्ध' इत्यनेन 'आह्लादकतां' 'क्षण-परिचय'ादित्यनेन सकृत् पठनमात्रेण मनोमोहनत्वं 'नयनसुभग'-मित्यनेन प्रतिपाद्यस्यार्थस्य पुरोवर्त्तित्वञ्च सूचयन् काव्यस्य सर्व्वेन्द्रियाह्लादकत्वं प्रथमं लक्षणमिति प्रकारान्तरेण प्रपञ्चयति सकौशलमेष कविवरः। अपि च—

"आशाबन्धः कुसुमसदृशं प्रायसो ह्यङ्गनानां
　　सद्यःपाति प्रणयिहृदयं विप्रयोगे रुणद्धि।"

इत्यत्रापि सरलभावेन कवेर्यया अलङ्कारसन्निवेशन-चातुर्य्यं तदतिमनोरमम्। आशा हि नाम हृदयबन्धनं चेतनानां, तथा च सर्व एव प्रायः समोच्यन्ते आशयैव समुज्जीवितान्तरात्मानः कठोरदुःखेष्वपि जीवनमवलम्बन्ते पुत्त्रशोकेष्वपि समुपस्थितेषु कथञ्चन भाविपुत्ररत्नमाशं-समाना: वर्त्तमानपुत्त्राणां मङ्गलचिन्तया वास्थापयन्ति चित्तेषु धैर्य्यम्। पतिविरहवती च प्राप्तकठोर-वेदनाभ्यर्द्दितान्तःकरणा पुत्त्रादिभ्यः सम्भविष्यदेव सुखमाशंस-माना शोकं परिहरति। एवमेव नियमो जगताम्।

एवं हि नाम भावनिवहं सर्व एवानुभवन्ति; तच्च सर्वानु-भवविषयीभूतं भावं कविः प्रसङ्गेन काव्यरसधारया समासिक्त-वचनविन्यासेन परिकल्पयामास 'आशाबन्धः' इति। परं प्रसङ्गेन भूमण्डलस्य नानास्थानवेदित्वं विज्ञानपाण्डित्यञ्च बहुधा ज्ञापयामास।

'धूमज्योतिः सलिलमरुतां सन्निपातः क्व मेघः' इत्यादिना परस्मा खल्वभिन्नता प्रतिपाद्यते कविना। प्रायश एव कवीनां प्रतिपत्ति-र्यत्—'मेघाः पदार्थान्तराणि वासवाधिकृताः' इति, अपिच मेघस्य यच्चनिर्दिष्टपथवर्णनावसरे भूखण्डस्य नानास्थानानि वर्णितानि यथाक्रमम्। तेन सकलार्थसारकल्पद्रुमो ह्ययं विजयते काव्य-कलासु श्रीमान् कविकुलविभाकरः कालिदासः।

यद्यप्येतदेव काव्यं निर्म्माय कल्पनाकुशलेन कविना विरतिरालप्स्यत, तथापि तस्य महाकविनाम जगति प्रथित-मभविष्यत्। एतस्य कवितापर्य्यालोचनेषु प्रत्येकमेव पदबन्धेषु भावसमावेशेषु च तथा तथा प्रतिभासते, यत् कालिदासो लेखनीमुपक्रम्य लेखान्नविरराम। नापि चिन्तावसरमङ्गीचकार; तथा तस्य सरलया कवितया सरलभावनिवहेन च प्रतिपद्यते, यन्नासीदस्य समानः स्वाभाविककाव्यरसनिपुणः कश्चिदपरः कविरिति कृतं पल्लवितेन।

**प्रतिपाद्यविवरणम्**—गुह्यकेश्वरस्य कोऽप्यनुचरः स्वाङ्ग-नायामत्यन्तमनुरक्ततया आत्मनियोगकर्म्मणि नितान्तमौदास्य' स्थापयन् तदर्थं न येते। तेन यक्षराट् क्रुध्यन् तस्मै वर्षमेकं 'प्रियाविच्छेदक्लेशमनुभूय रामाद्रौ निवस' इति शशाप। ततस्तदभिसम्पातेन प्रक्षीणात्मदैवभावः स यक्षाधि-पानुचरः अलकातो रामगिरौ पपात। तत्राष्टौ मासा-नुषित्वा दयिताविच्छेददुःखदुःखितान्तःकरणः उन्मत्त-प्रायोऽभवत्। ततश्च आषाढ़स्य प्रथमदिवसे नवजलधरपटले-

रुमरुद्धे नभस्थले प्रियाविरहदुःखविदूनमानसः स यक्षो धैर्य्यमपहाय दयितान्तिकमात्मोदन्तं प्रेरयितुं दौत्याय तमेव नवीनं धाराधरं प्रार्थयामास। तस्य भवनगमनपरिचये चित्रकूटादलकान्तं यावत् प्रसङ्गतः पार्श्ववर्त्तिनस्य भूखण्डस्य मानचित्रं नग-नदीप्रभृतीनाञ्च स्वरूपं व्यजिज्ञपत् मञ्जुलपदविन्यासाद्यलङ्कारनिबन्धनैः पूर्वमेघनामनि आदिमे सर्गे कविवरः। उत्तरमेघे तु अलकान्तर्वर्त्तिनो निजावासस्य दयितायाश्चाप्यभिज्ञानं गुह्यकाङ्गनाया विरहावस्थासमाश्वासनम्, वाचिकार्थकथनञ्चातिहृद्येनालङ्कारसन्निवेशेनैव वर्णितमिति किं बहुना वाक्प्रपञ्चेन।

**नायकादिसिद्धान्तः**—अस्य खलु नायको गुह्यकाधिपानुचरो गुह्यको धीरोदात्तः, नायिका च तदङ्गना स्वकीया मध्या विरहिण्यालम्बनविभावौ, जलधरसञ्चयादय उद्दीपनविभावाः, प्रणयापरपर्य्यायप्रकृष्टज्ञानशून्यतादयोऽनुभावाः, अवसादप्रभृतयो व्यभिचारिणः, रतिः स्थायी, प्रवासविप्रलम्भशृङ्गाराख्यरसोऽङ्गी, करुणप्रभृतयश्चाङ्गरसाः, रीतिः पाञ्चाली, गुणो माधुर्य्याख्यः, दूतो जलधरः सन्देशहारकः इति।

---

## मालतीमाधवसमालोचनम्—

मालतीमाधवं नाम प्रकरणं श्रीमन्महापण्डितकुलभूषणाचार्य्येण कविमुख्येन तत्रभवता भवभूतिना प्रणीतम्। एतद्धि शृङ्गार-रसप्रधानम्। अस्य खलु तावत् प्रतिपाद्यं कविसामयिक-

समाजचित्राङ्कनम्। तदानीं यैव समाजानामवस्था सैव कविना नाट्येन परिणमय्य वर्णिता। तथा च—"भवेत् प्रकरणे वृत्तं लौकिकं कविकल्पितम्" इत्युक्तेः प्रकरणस्य कविकल्पितत्वं सर्ववादिसम्मतम्। किन्तु प्रकरणस्यैतस्य नाम गुणाढ्यकृतायां वृहत्कथायां विद्यमानत्वेन कया रीत्या लक्षणसमन्वयस्तत् संचिन्त्य वयमतिमात्रं पर्य्याकुलाः।

मन्यामहे कविना वृहत्कथायाः कथांशमपहाय केवलं मालतीमाधवयोर्नाममात्रमादाय व्यरचि, प्रकरणमिदं महत्त्वात्म-कविवशक्तिविजृम्भितकल्पनामूलम्। अथवा अपरिज्ञाता एव कवेस्तत्रास्ति मालतीमाधवशीर्षको कापि कथा, काकतालीयन्यायेन समवर्त्तनैतन्नामेति, इतःपरं ज्ञानवृद्धैर्विशेषज्ञैरेव विशेषेणावधेयम्।

अस्य प्रतिपाद्यं कुण्डिनीपुराधिपामात्यदेवरातस्य सूनुना माधवेन पद्मावतीश्वरस्य मन्त्रिणो भूरिवसोर्दारिकाया मालत्याः प्रणयाभिव्यक्तिरूपं घटनापारम्पर्य्यम्। प्रकरणेऽस्मिन् कवेर्वर्त्तते भूयसी रचनापरिपाटी, या हि प्रतिपदमेवादधाति काव्यरस-रसिकानां शृङ्गारादिरसोन्मादनाम्। तथा च प्रथमत एव ग्रन्थसूचनायाम्—"चूड़ापीड़कपालसङ्कुलगलन्मन्दाकिनीवारयः" इत्यादौ जटाजुटस्यानवरतस्नानकपिशस्यापि भुजङ्गनद्धतया तिरोहितरूपत्वेनातिश्यामत्वेन मेघोदयम्; अत एव सर्पविहरण-सूचनम्, गङ्गाजलगलनेन वर्षणम्; कपालमालया बलाका-वलिम्; ललाटनेत्रत्विषा विद्युद्द्योतनम्; शिशुशशिना च

केतकशिखावत्वं दर्शयता मदनमोहोद्दीपनमुदिरमेदुरवनसमय-सूचनेन शृङ्गाररसशालिनोऽप्यस्य प्रकरणस्य कटाक्षितैति।

तथा कामन्दकीं बौद्धभिक्षुकीं परिकल्प्य इदमेव प्रत्याययति कविः यत् तदानीमार्य्यबौद्धधर्म्मयोरन्तरा नासीत्तवापि विद्वेष-चिन्ता, उभावपि परस्परं सौहार्द्देन निष्पादयतः समाजानां सुगूहितमपि प्रतिपाद्यमाग्रहातिशयेन। तदानीन्तनी योषिदपि अन्तःपुरमपहाय जनस्थानमागत्य सञ्चरति स्वातन्त्र्येण। तत्-प्रतिपादनाय सवयस्यां गजपृष्ठारूढ़ां मालतीं मदनमहोत्सव-दर्शनाय मदनोद्यानं गतवतीं तत्र कुसुमचयनव्याजेन बकुलतल-गतं माधवञ्च समुद्भाव्य तयोरागोन्मेषणमास्थाय लवङ्गिका-हस्तेन माधवगुम्फितां बकुलमालां विरहविधुरायै मालत्यै अर्पयित्वा कल्पनाराज्ये विजयते तत्रभवान् कविवरः।

येन प्रियप्रहिता हि मालिका मालत्याः घटनापारम्पर्य्येण गुरुकठोरामपि विरहवेदनां कथञ्चिदपि सान्त्वयित्वा मालती-विरहाधीरस्य माधवस्य मुहुर्मुहुश्चेतनाविगमे मालत्यभिज्ञानत्वेन तामेव मालिकामुद्भाव्यातिहृद्यमुपस्थापितं नाट्यकलापारिपाट्य-विधौ कविकुलप्रभाकरेण श्रीमता श्रीकण्ठेन।

तथा यत्र यत्र यया दिशा यमेव भावनिवहमभिव्यञ्जयितु-कामः तत्र तत्र तथैव निष्पाद्य प्रथितं यश आदधातीत्यत्र कः सन्देहः? तथा च अतिबीभत्समयश्मशानवाटवर्णनोपक्रमे पिशाचललनामधिकृत्य प्रत्याययति—'आन्त्रैः कल्पितमङ्गलप्रति-सराः स्त्रीहस्तरक्तोत्पलव्यक्तोत्तंसभृतः पिनह्य सहसा हृत्पुण्ड-

रीकस्रजः। एताः शोणितपङ्ककुम्कुमजुषः संभूय कान्तैः पिबन्त्यस्थिस्नेहसुरां कपालचषकैः पोताः पिशाचाङ्गनाः॥' इति यदतिबीभत्सानामपि पिशाचाङ्गनानामलङ्कारसन्निवेशनं तदतिरमणीयम्; रसव्यधायकरसस्यात्र यन्निवेशनं तदपि च हृद्यं सहृदयानाम्। यथास्मिन् प्रियतमैः सह मधुपानप्रवृत्त-स्रक्चन्दनाद्यलङ्कृतनायिकाप्रतीतिः संभोगशृङ्गाररसः प्रतीयमाणः प्रधानस्य चार्थभूतस्य बीभत्सरसस्याङ्गमिति रसवदलङ्कारस्य च शोभनं सुसन्निवेश इति।

अघोरघण्टशिष्यया कपालकुण्डलया मालत्याः हरणं, तस्या अपि कामन्दक्याः शिष्यया विदुष्या सौदामिन्या परिरक्षणं कल्पयित्वा प्रकरणस्योत्कर्षो निरतिशयं समाहितः। तथा सरिद्वारामोपवनानां यथा यत्र वर्णनं सुसन्निविष्टं तच्चातिशय-निसर्गानुकूलमूलम्। तथा च नवमाङ्के सौदामिनी—'पद्मावती विमलवारिविशालसिन्धुपारा सरित्परिकरच्छलतो बिभर्त्ति' इत्यादितः 'दधति करभाजामत्र भल्लूकयूना' इत्यादिश्लोकान्त-मतिरमणीयम्।

किन्तु महाकवेर्यद्यपि च सर्वत्रैवातुलनीया सृष्टिरत्र तथापि किञ्चिद्भावविपर्ययं मन्यामहे, षष्ठेऽङ्के शिवायतने लवङ्गिका-भ्रमेण मालत्या यत् माधवालिङ्गनं तदत्यस्वाभाविकं मामकानां हृदयम्। तत्र माधवेन स्वरव्यक्तयो न कृतः, नापि लवङ्गिकाया वेशोऽपि परिग्टतीतः, तथापि माधवपरिसज्जनं मालत्या उपस्थापनेन यत् कविः बाष्पारुद्धनयनं व्यपदिशति, तदपि च नानुकूलम्।

बाष्पाक्रान्तानां मुहूर्त्तमेव विभ्रमः सम्भवति, किन्तु मालती-माधवयोर्नाति ह्रस्वालापः कथं तादृशं विभ्रमं जनयितुमर्हतीति कृतमतिपल्लवितेन ।

संक्षिप्तेतिवृत्तम्—एतस्य प्रकरणस्य प्रथमेऽङ्के—बौद्धभिक्षुक्योः कामन्दक्यवलोकितयोः कथोपकथनम्, चित्रोपकरणहस्तस्य माधवभृत्यस्य कलहंसस्य उद्यानप्रवेशः, तत्र माधवमकरन्दकलहंसानां परस्परं मालतीविषयकसंलापश्च ।

द्वितीये—लवङ्गिकया माधवगुम्फितायाः बकुलमालायाः विरहविधुरायै मालत्यै समर्पणम्, मालतीसमीपे कामन्दक्याः आगमनञ्च ।

तृतीये—शिवायतने मालतीलवङ्गिकयोः समागमः, तत्र माधवस्यापि गमनम्, अलक्षितेन तेन तयोः पर्य्यवेक्षणम्, शार्दूलेन मदयन्तिकायाः आक्रमणम्, माधवसखेन मकरन्देन तस्याः परिरक्षणञ्च ।

चतुर्थे—विचेतनं मकरन्दं वीक्ष्य माधवस्यापि संज्ञा तिरोहिता, प्रतिहारीवचनेन मालतीमाधवयोः प्रणये नैराश्यम्, मकरन्दस्य मदयन्तिकायामनुरागाभिव्यक्तिः, पारासिन्धुनद्योः सङ्गमवर्णनञ्च ।

पञ्चमे—कापालिकाघोरघण्टशिष्यया कपालकुण्डलया मालत्याः हरणम्, महामांसहस्तेन माधवेन करालादेव्याः मन्दिरप्राङ्गणस्थे महाश्मशाने आगमनम्, कपालकुण्डलया

अघोरघण्टेन च करालादेवीबलिमुपहर्त्तुं मालत्याः देवीसमीपानयनम्, माधवेन तस्याः परिरक्षणम्, अघोरघण्टविनाशनञ्च ।

षष्ठे—मालत्यर्थम् अमात्यप्रहिताभरणस्य प्रतिहार्य्या कामन्दकीहस्ते समर्पणम्, लवङ्गिकाभ्रमेण मालत्याः माधवालिङ्गनम्, मकरन्दस्य मालतीवेशधारणम्, मालतीवेशपरिगृहीतस्य मकरन्दस्य राजनर्म्मसखेन नन्दनेन सह विवाहः ।

सप्तमे—मदयन्तिकाबुद्धरक्षितालवङ्गिकानां संलापः, निगूहितेन मकरन्देन मदयन्तिकायै आत्मनः प्रकाशः, मकरन्दाय तया आत्मनोऽर्पणञ्च ।

अष्टमे—मालतीमाधवयोः दीर्घिकाशिलातलोपस्थितिः, तत्र अवलोकितायाः समागमः, नगररक्षिपुरुषैः मकरन्दस्याक्रमणम्, तत्संवादेन तस्मात् कलहंसेन सह माधवस्य प्रस्थानम्, अवलोकितालवङ्गिकाबुद्धरक्षितानाञ्च एतत् विज्ञापयितुं कामन्दकीसमीपागमनम्, कपालकुण्डलाया मालतीमाहृत्य श्रीपर्वतगमनम्, मदयन्तिकादिभिः मालत्या अन्वेषणञ्च ।

नवमे—सौदामिन्या माधवमकरन्दयोरन्वेषणम्, मालतीविरहेण माधवस्य पुनः पुनश्चेतनायाः विगमः, माधवं पश्यतो मकरन्दस्य विलापः, पाटलवत्यां नद्यां तस्यात्मोत्सर्गाय प्रयत्नः, सौदामिन्या मालत्यभिज्ञानरूपायाः माधवप्रहितायाः बकुलमालिकायाः पुनः माधवाय प्रदानम्, समाधवायाः सौदामिन्याः प्रस्थानञ्च ।

दशमे—कामन्दकीलवङ्गिकामदयन्तिकानां मालत्यर्थं पर-

स्मरमाच्चेपोक्तिः, मधुमतीस्रोतस्वत्यां तासां जीवनपाताय उद्योगः, मूर्च्छितया मालत्या सह माधवस्योपस्थितिः सौदामिन्याः आगमनम्, राज्ञोऽभिमतप्रकाशनञ्च शोभनं वर्णितम् ।

**नायकादिसिद्धान्तः**—अस्य नायकोऽमात्यपुत्रो माधवो धीरप्रशान्तः, नायिका मालती स्वकीया मुग्धा, चालम्बनविभावौ, स्रगाद्यवलोकनादीन्युद्दीपनविभावाः, अन्योऽन्यालापाचिक्षेपादयोऽनुभावाः, निर्व्वेदादयो व्यभिचारिणः, रतिः स्थायी, सम्भोगशृङ्गाररसोऽङ्गी, भयानक-बीभत्सादयोऽङ्गरसाः, भिक्षुकीमकरन्दाद्याः सहायाः, रीतिः पाञ्चाली, गुणः ओजः, प्रस्तावना प्रयोगातिशयरूपा ।

---

## अभिज्ञानशकुन्तल-समालोचनम्—

अस्य किल इतरैरतुलनीयात्मनो रूपकस्य प्रथमतः समाप्तिं यावत् सर्व्वाङ्गमेव सुरसगुष्टमिति मतम्, एतदधीयानानां काव्यरसरसिकानाम् । अस्य च य एवांशः समग्रमालोच्यते स एवाद्वितीयकवेः श्रीमतः कालिदासस्य अलौकिकीं कवित्वशक्तिं विशेषेण विकाशयन् आलोचयितॄणां चेतसि कामप्यनिर्वचनीयां वाङ्मनसोरपरगोचरां नवीनानन्दधारामुद्भावयति ।

काव्यस्य हृदयं तावदतिमनोरमाणां चरित्राणामुत्पादनम्, उत्पाद्यमानानामपि तेषां देशकालावस्थामनुसृत्य समावेशः । तत्र च कवयितुरलौकिकीं प्रतिभामन्तरेण नान्यो गरीयानुपायः ।

नैसर्गिकव्यापारानुसारेण ये व्यापाराः प्रतिदिवसमेवोत्पद्यन्ते, स्वभावसुलभता च येषां पूर्व्वघटितानां व्यापाराणाम्, तदनुयायिघटनानिवेशविषये कविना समवहितेन वर्त्तितव्यम्। यतः स्वभावप्रतिकूलं वस्तु जनानां विरागमुपजनयति।

यदि पुनः प्राकृतान् व्यापारान् कवयिता आत्मनः प्रतिभाप्रभावेन स्वाभाविकादप्यधिकतरं हृद्यं विचित्रतामयञ्च निर्म्मातुं क्षमते, तस्यैवासाधारणी प्रतिभा सर्व्वथैव श्लाघनीया प्रच्छावतामतिमात्रम्। वस्तुतस्तु स्वाभाविकविषयेषु वैचित्र्यं प्रकटयितुमक्षमे काव्यकृतौ न प्रद्योतन्ते लवमपि प्रकृतकविजनसुलभा गुणाः। येनैव वैचित्र्यपरिरहितानां विदितपूर्व्वाणां विषयानां भूयः सन्निवेशः प्रत्यक्षतो लोकानामुपकार उत आसक्तिपरम्परागतानन्दधारा च नोपजायेत। यदधीतमपि काव्यं केषामप्युपकारं नोपस्कुरुते तद्धि काव्यमुत्तमत्वेनाङ्गीक्रियते परमविधेयैराचार्य्यपादैः। उक्तञ्च तैः 'निर्म्मेयं चरितं शुद्धं जगन्मङ्गलकारणम्' इति।

परन्तु तस्य च पुनरुक्तमवस्तुनः प्राचुर्य्येण उत्कर्षप्रतिपत्त्यर्थं वैचित्र्यविधानार्थं वा प्रयोजनमनुस्मृत्याप्रयोजनवस्तुनः सृष्टिरपि न दोषाय परं गुणायैव प्रभवति जगतामतिशयम्। अत्र खलु गीर्व्वाणवाणीपरिग्रहितानां नाट्यानामवतंसे शाकुन्तले प्रतिवर्णमयं विधानो विलसति, लोकशिक्षोपयोगिनामुपदेशानां विलासैः परिपूर्णमादितोऽवसानं यावत् बाहुल्येन।

इदं तावत् पद्मपुराणान्तर्गतेन दुष्मन्तशकुन्तलापरिणयप्रसङ्गो-

दन्तेन विमण्डितमलौकिकमपूर्वमतुलनीयञ्च दृश्यकाव्यमत्र जगति। न केवलमस्मद्देशीया एवास्मद्देशीयं काव्यं पक्षपातेन प्रशंसन्ति, अपि तु सुदूरयूरुपीया अपि देशनिरपेक्षा गुणपक्षपातिनो निरन्तरमेवालौकिकमाधुर्य्यरसं परिपिबन्तो बहुमन्यन्ते। अस्य तावत् नैसर्गिकोपवर्णनम् आश्रमपदम्, तथा शकुन्तलाया रमणीयतामतिसुष्टूपवर्णनमस्ति।

यथाहि शकुन्तलामुपवर्णयितुकामेन कविना दुष्मन्तमुखेन प्रकाशितम्—'इदं किलाव्याजमनोहरं वपुः' इत्यादिना शकुन्तलाया यथा कष्टासहिष्णुत्वमतिपेलवत्वञ्च प्रतीयते, मन्ये कविताकोटिकेनापि कविरण्यस्तथा प्रतिपादयितुं न प्रभवति। अपि च 'गच्छति पुरः शरीरम्' इत्यादिषु शकुन्तलायां राज्ञो दुष्मन्तस्य नितान्तमनुरक्तता वस्तुतो यथैव जायते प्रेमोपचय-विमलीकृतहृदयतायां सतां हृदयवृत्तिस्तथैवानया कवितया प्रतिपद्यते, एवमवस्थैव सञ्जायते प्रियजनसन्निधानादपरत्र गमनोन्मुखतायां सतां प्रेमिकाणाम्। सुसन्निवेशिता चेयमुपमा प्रतिपादनीयस्य शकुन्तलायां राजानुरागातिशयस्य प्रकृष्टतां कथयति, काव्यस्य महदिदं वैचित्र्यं नाम यद् गम्भीरमर्थं स्वल्पया सरलया च वाचा प्रबोधयतीति।

अन्यच्च शकुन्तलाया राजपुरं व्रजन्त्याः स्नेहसमाकुलान्तः-करणस्य तापसकुलपतेरपि कण्वस्य मुखात् प्रत्याययामास—

"शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्त्तुर्व्विप्रकृतापि रोषणतया मास्म प्रतिपं गमः।

भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥" इति

इममुपदेशमुपगृह्णन्त्यः कुलस्त्रियः सर्व्वथा प्रशस्यन्ते स्वामिगृहेषु। यदत्र चानसूयां प्रियंवदाञ्च युगलतया शार्ङ्गरवं शारद्वतञ्च द्वैतेन समुपस्थापयामास। तत्र केषाञ्चिदियमेव चिन्ता—यत् अनसूया प्रियंवदा च नात्यसमालम्बनीभूतायाः शकुन्तलायाः चिरमेव सहचारिण्यौ। तत्र प्रियंवदा तपोवनसन्निवासापि प्रागल्भ्यवती, अनसूया च शान्ता आश्रमपदोपशमविग्रहा चिरमूर्त्तिमती तितिक्षा।

नूनं रचनाकुशलस्य कविशिरोमणेः कालिदासस्य तादृशकल्पनाया अस्ति कश्चित् सुगूढाभिप्रायः, स चायमिति मन्यते—'दुष्मन्तो हि राजा सकलनीत्यर्थकुशलः कलापारदर्शी गूढसञ्चारजटिलचेताश्च स्वभावतो राजवृत्त्या विषयविशेषेषु च सुकुमारतां पूर्व्वतमामुपयुञ्जानः परां कीर्त्तिपदवीं राष्ट्रेषु समुपागत इति, तत्र यदि केवलं प्रगल्भया प्रियंवदया समुपगतामेव शकुन्तलां राज्ञः समीपे कविरुपस्थापयिष्यत्; तर्हि प्रियंवदायाः प्रागल्भ्यपरिलोकनदुर्म्मणायितो राजा दुष्मन्तः शकुन्तलायामन्यथा वा सम्भावयेत्, यतो विजने तपोवने तादृशप्रगल्भसहचरी समभिव्याहृता-सच्चरित्रेति राजवृत्तिसमाक्रान्ततया कुटिलनीतिचतुरस्य तस्य कथं नाम न जायतामत्र सन्देहधारा।

नैव तया सञ्चरति केषाञ्चित् सहसा मानसेषु, अपिच अनसूयां परिहाय प्रियंवदामात्रोपस्थापने—'अहं गमिस्सं'

इत्यादिकमुपक्रम्य न तथा रसविकाशः सम्भवेत्; प्रियंवदां परिहाय गम्भीरायाः यथार्थतपोवनवासयोग्यभावाया अनसूयाया उपस्थापनेऽपि न तथा कविवाञ्छितशृङ्गाररसनिष्यन्दः स्यात्, नितरां मुख्यतया स्वरूपेन वा प्रकारेण प्रकाशते प्रियंवदायाः प्रागल्भ्यमेव मूलं शकुन्तलायास्तथा तथा रसविकाशस्य। तथा च—'अत्तणो जोव्वनारम्भं उवालहस्स' इत्यादि न खलु तादृशी कथा कदापि अनसूयाया मुखाद् बहिरगमिष्यत्।

एवमेव मनसि कृत्य काव्यसामञ्जस्यरक्षार्थम् अनसूयां गम्भीरां प्रियंवदाञ्च प्रगल्भां समुपस्थापितवान् कविकुलशिरोमणिः श्रीमान् कालिदासः। शिष्यद्वयस्यापि एकस्य कठोरस्य अपरस्य च कोमलस्य समुपस्थापने तादृगेव कारणम्। कण्वो हि मुनिस्तपोवनवासी कुलपतिरपि संसारदृशा निस्पृहोऽपि स्नेहसमाकुलान्तःकरणः तत्त्वप्रकाशी निरञ्जनोऽपि शकुन्तलाविरहचिन्तासमुद्विग्नान्तरात्मा इति व्यवस्थापितं कविना। तदुपयोगिभावविकाशस्य तस्य प्रयोजनीय इति, अन्यथा कल्पने कवेः किञ्चिन्न्यूनतापत्तिः। तस्य च शिष्येषु कोऽपि सन्देहोऽपि प्रावर्त्तत, तथा च—बहुकालं दुष्मन्तेन परिणीता शकुन्तला, स च यथा शकुन्तलाया नगरप्रवेशस्य कालं निर्दिश्य राज्ये प्रस्थितः, तथाकालान्तरे न प्राहिणोत् पौरजनान् शकुन्तलां नेतुं, तन्नूनं कश्चिदेव संवादः, येन राज्ञस्तथाचरणव्याघातः।

अपि च रहस्यमेव शकुन्तलाम् अविजानतो लोकस्य दुष्मन्तः परिणिनाय, सा चेयमापन्नसत्त्वा प्रस्थाप्यते नगरे तत्र कश्चिदेव

सहगामी प्रयोजनीयः, यो बहुधा निरोध्य राजानं दैवनिबन्धे-नास्वीकुर्वन्तमपि शकुन्तलास्वीकाराभिमुखं विधातुं शक्नुयादिति। स च राजसमागमेन शङ्कितो वा निर्जनवासाभ्यासाच्च जनसंमर्द्दसमागमेनोद्विग्नमना वा यदि तावत् कार्य्यं विनाशयेदिति नानाविधविचारविशारदो मुनिः कण्वः शार्ङ्गरवं अप्रशान्तभावं वचनप्रयोगकुशलं संप्रेषितवान् शकुन्तलासाहाय्येन।

तत्रैवमपि परिचिन्ता तस्य यत् शार्ङ्गरवो हि समुद्धतो यदि केवलमौद्धत्यमेव विधाय कार्य्यहानिं जनयेत् तन्नु नमतिदुःखं सम्पत्स्यते, तत् प्रशान्तोऽपि शारद्वतो दीयतामिति शारद्वतस्य प्रेषणम्।

गौतमी च राज्ञः कथञ्चिदन्यथाशङ्काव्याघातमेव जनयितु-मुपस्थापितेति। ततश्च राजपुरे समुपस्थाय यथायथं कण्वेन समाशङ्कितं, तथा तथैव वृत्तभागः समजनि।

राज्ञो धैर्य्यं महत्त्वं धर्म्मपरायणत्वं परतः कथञ्चिदुन्मेषित-स्मृतित्वेन कृतानुतापः अङ्गुरीयकस्य तथा वैचित्र्येण समागमः। सप्तमाङ्कादौ च मारीचाश्रमभावे शकुन्तलातनयसर्वदमदनक्रीड़ा राजशङ्कानिराकरणशैल्किकञ्च पातिव्रत्यकथासमाशंसनमित्यादि नानाविधरसविशेषपूता विजयते कालिदासलेखनी सुधामयी, तत्र मिश्रकेशीकथावतरणप्रभृतिकं नूतनभावमयमिव समादधाति हृदयेषु नवीनालोकधारां यथा पूतम्मन्याः काव्यसम्पर्क्कमतिमधुरं सकलसारं मन्यमानाः पुराणा अपि निरालम्बमाना अपि रसेषु निकज्जन्तीति कृतमधिकवागुपन्यासेन।

**संक्षिप्तेतिवृत्तम्**—काव्यस्यास्य प्रथमेऽङ्के—मृगानुसारिणो राज्ञो दुष्मन्तस्य तपोवनगमनम्, तत्र सहचरीभ्यां प्रियंवदानसूयाभ्यां समं शकुन्तलायाः सन्दर्शनम्, तस्याः परिचयाधिगतिः, अन्योऽन्ययोरागाभिव्यक्तिश्च।

द्वितीये—विदूषकमाधव्येन सह शकुन्तलासम्बन्धिकथोपकथनम्, तापसानां यज्ञविघ्ननिराकर्त्तुं नृपतेर्दुष्मन्तस्य आश्रमपदगमनञ्च।

तृतीये—मीनकेतनायत्तचित्तयोः शकुन्तलादुष्मन्तयोर्मिलनम् नेपथ्ये तयोर्विच्छेदार्थं सङ्केतोक्तिः, शाग्ल्युदकहस्तेन गौतम्या आगमनञ्च।

चतुर्थे—अनसूयाप्रियंवदयोः कुसुमचयनम्, शकुन्तलां प्रति दुर्वाससः शापः, विष्कम्भके प्रभातोपवर्णनम्, कण्वस्य शकुन्तलागर्भवृत्तान्तश्रवणम्, शकुन्तलायाः राजभवनगमनवेलायां कण्वस्योपदेशकथनम्, शकुन्तलायाः दुष्मन्तालयगमनञ्च।

पञ्चमे—राज्ञः शकुन्तलाप्रत्याख्यानम्, अप्सरोभिः शकुन्तलायास्तिरोधानञ्च। अङ्कावतारे—धीवरादङ्गुरीयकप्राप्तिः।

षष्ठे—अभिज्ञानाङ्गुरीयकदर्शनेन स्मृतवृत्तस्य दुष्मन्तस्य अनुतापः, विरहानुभवः, पुरन्दरसारथेर्मातलेः समागमः, दुर्जयासुरनिर्ज्जिताय तस्य त्रिदिवगमनञ्च।

सप्तमे—तस्मादेव स्वर्गादाकाशवर्त्तना समागतयोर्मातलिदुष्मन्तयोः कथोपकथनम्, मरीचेराश्रमावतरणम्, तत्र शकुन्तलया अङ्गजेन च साकं भूयः सम्मिलनम्, कश्यपादीनामाशीःशंसनञ्चातिहृद्येन वर्णितमिति।

**नायकादिसिद्धान्तः**—अस्य खलु नायको दुष्मन्तो धीरोदात्तः, नायिका च शकुन्तला स्वकीया मुग्धालम्बनविभावौ, चन्द्र-चन्दन-सुगन्धिकुसुम-कुमुद-वसन्त-कुसुमादीन्युद्दीपनानि, अन्योऽन्यचतुरादिक्रिया अनुभावाः, निर्वेदादयो व्यभिचारिणः, रतिः स्थायी, सम्भोगशृङ्गाररसोऽङ्गी, हास-करुण-प्रवास-विप्रलम्भाख्यशृङ्गाराः योऽङ्गरसाः, विदूषकाद्याः सहायाः, रीतिः पाञ्चाली, गुणोमाधुर्याख्यः, प्रस्तावनावलगिताख्येति।

---

## मृच्छकटिक-समालोचनम्—

मृच्छकटिकं नाम प्रकरणं शृङ्गाररसात्मकम्, अस्य कविः सामाजिककाव्यकुशलः शूद्रको नाम। यस्य काव्यरसप्रवाहः सरलया भाषया विस्फूर्जितो हरति हृदयं सहृदयानाम्। अस्य तावत् काव्यस्य प्रतिपदमेव प्रसरति रसप्रवाहः। प्रसादगुणसम्वलितया च रचनया भयानलौकिकानन्दः सञ्जायते सचेतसां चेतसि। अभिनयकाले चास्य कुतश्चिदनुभूतमिव स्वर्गसौन्दर्य्यमुपतिष्ठति। काव्यमिदं मन्दारकुसुमस्रगिव गलविलम्बिनी स्वर्गीयामुपपादयति प्रेम-धाराम्।

यत् प्रस्तावनायां, तत् तत् सव मञ्जुसमेव सम्पादयामास कविः काव्यदिशा। तथाहि प्रस्तावनायां प्रतिज्ञा—

"तयोरिदं सत्सुरतोत्सवाश्रयं
नयप्रचारं व्यवहारदुष्टताम् ।
खलस्वभावं भवितव्यतां तथा
चकार सर्वं किल शूद्रको नृपः ॥"

प्रतिज्ञानुरूपञ्च विहितं कविना काव्यप्रणयनविधौ, तथा च राजश्यालकस्य शकारस्य चरितमन्तरा निवेश्य खलस्वभावं व्यवहारप्रकारमुपवर्ण्य नीतिप्रचारं, अकाण्डे वसन्तसेनायास्तया-समागमम् । अत्यन्तविपत्पातसम्भावनायामपि भवितव्यतां चारुदत्तस्य निर्दोषस्यापि दण्डविधानार्थं श्मशानभूमौ संप्रेषण-निवेशेन व्यवहारदोषं तथा चारुदत्ते वसन्तसेनानुरागमालिख्य सत्सुरतोत्सवं सम्पादयन् कविः कां नाम रचनायामुत्तमता-मादर्शयामास । अपि च गणिकाया अपि तथाविधं निःस्वार्थ-मात्मविसर्जनं ननमलौकिकमिति । अनुसृत्य तस्या वसन्तसे-नायाः प्रतिपदमेव निःस्वार्थताविकाशः ।

भूयानयं गुणः कविप्रवरस्य यदसमञ्जसोऽपि गणिकात्म-जाया वसन्तसेनाया भावनिवहः समञ्जसतया विवचित इति, चारुदत्तस्य च तथा प्रतीयते दीनातिदीनस्यापि चरित्रशुद्धिः यथा परमैश्वर्य्यवतामपि सर्व्वथा दुर्लभतया ज्ञायते । अपि चास्य सरलभाषाशुद्धतया सरलभावसमाश्लिष्टतया च प्रसादगुणबाहुल्य-वती रचना नितरां सहृदयहृदयचमत्कारिणी श्रुतिमात्रेण स्वभावतो जात इव भावनिवहः परितर्पयति तदानीमात्मानम् । तथाहि—

'दारिद्र्यात् पुरुषस्य बान्धवजनो वाक्ये न सन्तिष्ठते ।
संप्राप्तो गृहमुत्सवेषु धनिनां सावज्ञमालोक्यते'' ॥

'गर्ज वा वर्ष वा शक्र, मुञ्च वा शतशोऽशनिम् ।
न हि शक्याः स्त्रियो रोद्धुं प्रस्थिता दयितं प्रति ॥'

इत्यादिवाक्येषु कविर्यथा भावनिवहं प्रतिपादयितुं समर्थ आसीत्, तथा तथैव सारल्येन लोकैः प्रतिपाद्यते श्रुतिमाधुर्येण, अयमेक एव प्रधानतमो गुणः कवीनां नाम ।

लौकिकव्यवहारविज्ञानञ्च काव्यपाठस्य प्रकृष्टं फलं, तस्य सामाजिककाव्यपाठेन यथा लोकानामधिगतं स्यात्, न तथा काव्यान्तरानुशीलनेनेति । तथाहि—समाजेषु यथा यथा प्रचरन्ति स्वभावतो भावनिवहाः, यथा च व्यवहारजातानि, तानि तानि नूनमद्यापि स्वाभाविकतामुपयान्ति । अनुभूतरसेषु अलौकिकेषु भावेषु चिन्तासंक्रमे च कथमिव अत्रानुरागः ? अननुरक्ततायाञ्च कथं तच्चरितस्य नितरां परिशुद्धस्यापि शिक्षा नाम ? अपि च नान्दीमुपक्रम्य—'गौरीभुजलता यत्र विद्युल्लेखेव राजते, इत्युपमासंश्लिष्टभावनिबन्धेन शृङ्गाररसमयमेव नाटकं संपत्स्यत इति मुख्यतो ज्ञापितम् । तदप्यत्तुस्याभीष्टस्य प्रकृष्टतामुपाधत्ते ।

अन्यच्चप्रस्तावनायां—'क्षुधया ममाक्षिणी खट्खटायेते' इत्यादिना दारिद्र्यविकाशस्यापि भूयः प्रक्रमितव्यता सूचिता । शकारवाक्यस्य असामञ्जस्यञ्च सूचितम् । यथैषां चरित्रपरिदर्शनेन रूपकल्पनमव्याहतं स्यात्, लोकशिक्षा च सम्यक् सम्पद्यते, तथैव कविः कौशलेन कृतवानिति ।

प्रथमतो नाटके मुख्यभावेन दुश्चरित्रं सुचरित्रञ्च समवस्थाप्य पात्राणामुत्कर्षप्रकर्षौ पर्य्यालोच्य समाजशिक्षानैपुण्यं सन्दर्शितम् कविवरेण। तथा च शकारः सर्व्वपापमूर्त्तिरिव समुपस्थापितः, परिणामकठोरतां पापकर्म्मणां परिचाययामास निपुणम्। चारुदत्तस्य भूयः कठोरास्वपि दशासु निमग्नः परिणामे रमणीयं भावं लेभे।

नूनमेष स्वाभाविकः प्रकारः। यत् पापिनामधोगतिः कष्टातिशयसंसर्गश्च, पुण्यात्मनाञ्च समुन्नतिः परिणामे प्रमोदलाभश्च। अतएव ये ये पापात्मानः शकारप्रभृतयो दुष्कर्म्मकारिणः पुण्यात्मानश्च चारुदत्तवसन्तसेनादयः ते ते योग्यतमामेव भूमिमधिरोहन्तः समाजशिक्षाविधिमपूर्वभावेन सहृदयहृदयेषु सम्पादयन्तः परमानन्दपदवीं प्रवर्त्तयन्ति।

जात्या निकृष्टस्यापि यदेकान्तस्वभावसौष्ठवं वृत्त्या नीचस्यापि यदुत्कृष्टचारित्रम् इति द्वयं सम्पादयामास, चण्डालद्वयं शकारभृत्यञ्च समुपस्थापयन् शूद्रकः कविः पारिषदनेत्रयोः कल्पनाकुशलो नाम। एवमिदं काव्यं समालोचनासु प्रकर्षमुपाधत्ते कुतोऽस्तु सहृदयानामेतत्काव्यसमालोचनायां निरुत्सुकत्वं स्वत एव सञ्जायतेऽत्र प्रकरणे भूयाननुरागश्च। आपाततश्च काव्यजगति प्रकृष्टमेव पदमुपाश्रयते मृच्छकटिकं नाम प्रकरणं, कवेस्च प्रकरणेनानेन प्रकृष्टमेव प्रतीयते समाजशिक्षापारदर्शित्वं अवगाहता च सञ्जायते तच्छिन्नेति कृतमधिकवचसा।

**संक्षिप्तेतिवृत्तम्**—अस्य तावत् प्रकरणस्य प्रथमेऽङ्के—वश्यवृत्तिपरिगृहीतस्य द्विजचारुदत्तस्यावस्थापकर्षात् दारिद्र्यानुभवसमुत्थो निरतिशयो खेदः, नृपश्यालकस्य शकारस्य चारुदत्तानुरक्तां गणिकां वसन्तसेनां गृहीतुं महानेव प्रयासः, तत्प्रतिकूलाया वसन्तसेनायाश्चारुदत्तभवनप्रवेशः, तत्राभरणन्यासश्च ।

द्वितीये—द्यूतकराणां बहुच्छलं क्रीड़ितं, पणादानप्रकारः, वसन्तसेनासम्बाहकसम्वादः, कर्णपूरकप्रवेशः, वसन्तसेनायाश्चारुदत्तानुरक्तिप्रकाशश्च ।

तृतीये—चारुदत्तावासे शर्विलकस्य सन्धिखननम्, वसन्तसेनान्यासीकृतालङ्कारभाण्डापहरणञ्च ।

चतुर्थे—न्यस्तालङ्कारविनिमयेन रत्नावलीहारप्रदानाय मैत्रेयस्य वसन्तसेनायाः गृहगमनम्, तत्र तस्याः श्रीश्वर्य्यविलोकनम्, मदनिकाशर्विलकमिलनं, अलङ्कारभाण्डाधिगतिश्च ।

पञ्चमे—दुर्द्दिनवर्णनप्रकारः, चारुदत्तभवने वसन्तसेनायाः समागमनञ्च ।

षष्ठे—भूपचारकप्रणष्टस्य गोपालदारस्यार्य्यकस्य शकटविपर्य्यासेन चारुदत्तान्तिकागमनम् ।

सप्तमे—चारुदत्तार्य्यकसंवादः ।

अष्टमे—यानविपर्य्ययेण वसन्तसेनायाः संस्थानकोद्यानप्राप्तिः, संस्थानस्य वसन्तसेनामोटनञ्च ।

नवमे—वसन्तसेना चारुदत्तेन मोटितेति शकारस्याधिकरणे मिथ्याव्यवहारायणम्, विचारप्रकारश्च।

दशमे—शूलारोहणाय चारुदत्तस्य श्मशानभूमावानयनम्, चारुदत्तस्य तद्दान्धवानाञ्च खेदोक्तिः, वसन्तसेनासमागमः, आर्य्यकस्य राज्याधिगतिः, सदारापत्यस्य तावद्व्यसनविपर्य्ययः, शकारनिर्य्यातनं, चारुदत्तस्य तदपराधमर्षणञ्चेति।

**नायकादिसिद्धान्तः**—नायकश्चारुदत्तो धीरप्रशान्तः, अनुरक्ता गणिका वसन्तसेना, कुलजा स्वकीया मध्या धूता च नायिके, चालम्बनविभावाः, प्रावृट्समयोदयादय उद्दीपनविभावाः, अन्योऽन्यालापाच्चिक्रियादयोऽनुभावाः, निर्वेदादयो व्यभिचारिणः, रतिः स्थायी, सम्भोगशृङ्गाररसोऽङ्गी, करुणहास्यादयोऽङ्गरसाः, विटचेटविदूषकाद्याः सहायाः, रीतिः लाटी, गुणः प्रसादाख्यः, प्रस्तावना कथोद्घातरूपा इति।

---

## मुद्राराक्षससमालोचनम्—

मुद्राराक्षसनामधेयं वीररसात्मकं दृश्यकाव्यम्। अस्य तावत् कविः सुपण्डितो विशाखदत्तो नाम। महाराजस्य पृथोरङ्गजः, सामन्तवटेश्वरदत्तस्य च नप्ता। यस्य कवितारसनिष्यन्दैरानन्दपरम्परां समभिनन्दयन्ति काव्यरसरसिकाः। नाटकेऽस्मिन् महती विद्यते रचनाविन्यासचातुर्य्यमयी गभीरता, यञ्च प्रतिपदमेव समुन्नयति समादधाति च कवीनां

वीररसोन्मादम्। तथा च प्रस्तावनायाम्—'आः! क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति बलात्?' इति प्रारम्भ एव वीररसप्रकर्षो नाम।

अपि च नान्दीमारभ्य यथा कविना प्रदर्शितं शब्दविन्यास-सार्थक्यं रचनापाटवञ्च, तत्तत् सर्व्वमतिशयमेव हृद्यमिति। प्रथमतस्तु कुटिलनीतिबाहुल्यमयस्य नाटकस्यास्य नान्द्यामेव प्रसभमुद्भासितः कुटिलनयो रचनाकुशलेन कविना—'धन्या केयं स्थिता ते शिरसि? शशिकला, किन्नु नामैतदस्याः?' इत्यादिना 'पादस्याविर्भवन्तीमवनतिमवनेः रक्षतः स्वैरपातैः' इत्यादि द्वितीयनान्दीश्लोकेन च क्रोधवह्निना नन्दवंशवत् सराक्षसं मलयकेतुं पातयितुं समर्थस्यापि चाणक्यस्य राक्षससंजिघृक्षानु-रोधात् कृच्छ्रेण कुटिलनीतिप्रयोगाभिनिवेश इति ध्वन्यर्थेन प्रकृतोपयोगित्वमुट्टङ्कितम्।

'क्रूरग्रहः सकेतुः' इत्यादिना च प्रस्तुतार्थमुपक्रमस्य भूयः कौशलमुपन्यस्तं, यथा च तत्र यथा प्रस्तावनालक्षणसङ्गतिः न तथा प्रायः प्रतिपद्यते रचनास्वन्यासु। रचना चास्य नाटकस्य चित्तविक्षेपसंसाधिन्योजोगुणप्रधाना नाम। यथा पताका-स्थानकादीनां राजनीतिचातुर्य्यादीनाञ्च बहुलसन्निवेशेन रमणीयतामपूर्वामुपधत्ते नाटकमिदम्।

अलङ्कारसमलङ्कृतत्वं रचनानां, रसोपयोगित्वं भाषाणां, गम्भीरत्वञ्च भावबन्धानाम् इत्येते नाना गुणा एव तत्र स्फुरन्ति समन्तुसन्धीयमानानां। नाटकोक्तसन्धीनां यथालक्षणं सुसन्निवेशः।

तेषां तेषां प्रकृष्टचरितानां नैपुण्येन रसोद्भासकत्वं घटनायाः सुसमञ्जसता च ; नूनमिति गुणाः प्रसरन्ति कविप्रतिभाप्रत्यायकाः प्रशस्यतमाः 'कार्य्योपक्षेपमादौ' इत्यादिभिः, 'मध्ये निश्चित-सन्चयेन कथितम्' इत्यादिभिश्च प्रकृतोपयोगिभावसंरक्षणेन च पाण्डित्यविकाशः कवेः सुव्यक्तः।

'प्रणमत यमस्य चरणे' 'कमलानां मनोहराणामपि' 'पीत्वा निरवशेषं कुसुमरसम्' इत्यादिषु प्रकृतोपयोगिगूढ़ार्थसन्निवेशेन कविप्रतिभा सुतीक्ष्णतमा परिज्ञायते। कुटिलनित्यर्थगर्भतयैव चाणक्यस्य कौटिल्यो नाम। मुद्रया परिगृहीतराक्षसत्वेन च मुद्राराक्षसं प्रकृष्टतरं नाटकमिति।

अत्र न तथा कश्चिद्दोषो विलसति, यथा रसोच्छेदः सम्भवतीति, नानागुणसन्निवेशश्च काव्योत्कर्षसाधको वर्त्तते, तथा च 'ध्वनिस्तत्काव्यमुत्तमम्'इति दर्पणोक्तकाव्यप्रकर्षसंसाधकव्यङ्ग्यार्थबाहुल्येन मुद्राराक्षसमुत्तमं काव्यमिति कोऽत्र विसम्वादः। अपि च मृच्छकटिकाख्यप्रकरणे पुनः पुनरुक्तिदोषेण पञ्चमाङ्कादौ भूयान् रसच्छेदः प्रपद्यते अस्वाभाविकता च।

तया च बहुप्राकृतभाषाया अनधिगतार्थकतयैव मूढ़तामाभजते काव्यविदामपि साधारणानामन्तःकरणम्। रचनागम्भीरतायामपि स्वयमेव प्रकृष्यते मृच्छकटिकात् मुद्राराक्षसं नाम नाटकम्, अवश्यमिदमभ्युपगन्तव्यम्, यत् समाजशिक्षामात्रसमुद्देशी समाजस्य स्वाभाविकावस्था-पर्य्यालोचनमात्रापेक्षी च कविवरः शूद्रकः

सरलया भाषया सरलेन च भावनिवहेन काव्यं प्रणीतवान्, का तत्र हीनतेति ? तथापि रूपकद्वयसमालोचनायां नानागुण-सम्बलिततया न मुद्राराक्षसमपकृष्टपदवीमधिशेते। काव्योत्कर्ष-संसाधकगुणबाहुल्येनैव काव्योत्कर्षः संसाधयितव्यः। कवि-प्रकर्षन्तु समाजशिक्षाविधानादिपारदर्शितयापि सञ्जायते, इत्यलं बाहुल्येन।

**सङ्क्षिप्तेतिवृत्तम्**—अस्य तावत् मुद्राराक्षसनाटकस्य प्रथमेऽङ्के—परमनीतिज्ञस्य चाणक्यस्य राजनीतिसंशीलनम्, प्रणिधिमुखात् प्रतिपक्षाणामाचेष्टिताकर्णनञ्च।

द्वितीये—चारराक्षससंवादः, राक्षसस्य चरमुखादात्मप्रयोग-वैफल्यश्रवणञ्च।

तृतीये—चाणक्यस्य वसन्तोत्सवनिवारणापदेशेन चन्द्रगुप्तेन सह कृत्रिमकलहः।

चतुर्थे—प्रणिधिमुखतः कुसुमपुरोदन्तश्रवणेन राक्षसस्य विषादः, मलयकेतुना च प्रयोगकरणविचारः।

पञ्चमे—राक्षसं प्रति मलयकेतोरविश्वासः राक्षसनिरसनञ्च।

षष्ठे—चन्दनदासस्य शूलारोपणवार्त्ताकर्णनेन राक्षसस्य शोकः, कुसुमपुरप्रवेशः, चन्दनदासमोक्षणाय आत्मदेहार्पणं-विचारश्च।

सप्तमे—राक्षसस्यात्मसमर्पणम्, वणिजश्चन्दनदासस्य मुक्तिः, राक्षसस्य राज्ञश्चन्द्रगुप्तस्य समस्तकरणाधीश्वरप्राधान्यामात्यपद-मध्यासनञ्च वर्णितमिति वस्तुसंक्षेपः।

**नायकादिसिद्धान्तः**—अस्य खलु नायकश्चन्द्रगुप्तो धीरललितः, प्रतिनायको मलयकेतुश्चालम्बनविभावौ, परस्परमुद्दिश्य परस्परतर्जितादीन्युद्दीपनविभावाः, उपायचिन्तनादयोऽनुभावाः, उत्साहः स्थायी, वीररसोऽङ्गी, करुणादयोऽङ्गरसाः, चाणक्यराक्षसौ नायकप्रतिनायकयोरुपनायकसंज्ञकौ सहायौ, रीतिः गौड़ी, ओजोनाम गुणः प्रधानम्, "पदानि त्वगतार्थानि" इत्यादि दर्पणकारोक्तेः, प्रस्तावना उद्घात्यकरूपा इति।

---

## विक्रमोर्वशीयसमालोचनम्—

विक्रमोर्वशीयं हि नाम त्रोटकं तत्रभवता श्रीमन्महाकविना कालिदासेन प्रणीतम्। एतस्यातिमनोहरमेव कथासन्दर्भादिकाव्यवैभवं परमरमणीयम्। चतुर्थेऽङ्के राज्ञो-नष्टप्रियतमामार्गणक्रमोऽतिसुन्दरः। अस्मिन्नपि काव्ये पद्यानि ललितमधुराणि स्वहृदयसमास्वाद्यानि वस्तूनि कवेरितरयोर्नाटकयोरिव विद्यन्ते। तया च प्रियप्रसादनार्थं चन्द्रोदये समागमिष्यन्त्यामौशीनर्य्यां विदूषकवाक्यमाकर्ण्य प्राचीं समालोक्य राज्ञः पुरूरवस उक्तिः,—

'उदयगूढशशाङ्कमरीचिभिस्तमसि दूरतरं प्रसारिते।
अलकसंयमनादिव लोचने हरति मे हरिवाहनदिङ्मुखम्॥'

अत्र यदुदयोन्मुखं शशाङ्कमवलोक्यापनीतालकजालं वराङ्ग-

नायाः मुखश्रियमिव शान्तमधुरया नवीनया दिशा प्रत्यक्षमेव प्रत्याययति कविः काव्यशास्त्रमध्ययितॄणां मनांसि तद्धि ऋते एतत्कल्पनाकुञ्जकोकिलस्य कवयितुर्लेखनीं नान्यत्र सुसुलभमिति ।

त्रोटकेऽस्मिन् प्रथमतः उर्वशीपुरूरवसोः परिचयसमालोचनावसरे समुदेति स्वतः एव हृदयभावोऽस्माकं यदुर्वशी सोमवंशप्रसूनस्य राज्ञः पुरूरवसो, द्युलोकदुर्लभवीर्यवत्तया वा कृतज्ञतया वा विजितकन्दर्पलावण्यतया वा सन्दर्शनमात्रेणैव स्वर्गभोगपरित्यक्तापि अप्सरा अपि अमानुषपदमधिशयानापि तस्मिन् राजनि विशेषेण रमते; तदेव हि नाटकानां शीर्षतमस्य अभिज्ञानशकुन्तलस्य दुष्मन्तशकुन्तलयोः प्रथमानुरागकालापेक्षया चारुतरमभिधत्ते । शाकुन्तले तथाभूतं किमपि अनीर्वचनीयं न समजायत, येन प्रथमपरिचय एव प्रणयस्य दृढ़तामभिधत्ते, अवश्यं दुष्मन्तोऽपि राजा नानागुणसम्पन्नो वीर्यवान् लावण्यवान् राजचक्रवर्त्तिलक्ष्मणयुक्तः, किन्तु तत्र न तथा किमपि प्रकाशते, यथा प्रथमपरिचय एव तथावत् प्रणयदृढ़तामुत्पादयितुं प्रभवति ।

अत्र तावत् चित्रलेखामुपस्थाप्य तन्मुखेन राज्ञो महत्त्वम् आसक्तेरपि यथाकथञ्चिद्धेतुं स्वल्पेनैव वचसा प्रकाशयति कविवरः । तथा च उर्वशी—(उन्मील्यचक्षुषी) 'किं सम्पहारदंसिणा महेन्देण अवभुवसम्हि ?' चित्रलेखा—'ण महेन्देण महेन्दसरिसाणुभाविणा राएसिणा पुरूरवसेण ।' इत्यत्र प्रथमपरिचय एव राज्ञि महेन्द्रसदृशानुभावः उर्वश्या आसक्तिव्यञ्जकः । काव्यकलासंसृष्टौ च

केशिदानवभयवित्रस्तां मूर्च्छितां वेपथुमतीमुर्वशीमुपस्थाप्य तस्याः मोहापगमे स्वप्नानुभूतमिव राजानमवलोक्य यदनीर्वचनीयतां सुसमाविशयति स्वल्पेनैव वचसा सकलकविदुर्लभकल्पनाविभवस्तत्रभवान् कालिदासः।

मन्ये नाटकीयवस्तुनस्तादृक् चमत्कारित्वसंस्थापनाय कविरयं शतेनैव सुभाषितेन तथा सम्पादयितुं समर्थोऽस्ति। अपि च एतन्नाटकीयवस्तुनो विष्णुपुराणस्य चतुर्थे अंशे षष्ठाध्याये विद्यते, यदाख्यायिका, तदवलम्ब्य कविः तस्माच्च नवीनेन भावेन नवीनया दिशा बोधयामास काव्यसमालोचयितॄणां चेतांसि नवनवभावाभिनिवेशेनातिमात्रम्। तथा हि भगवती मित्रावरुणस्य शापेन उर्वशी मानुषी भूत्वा प्रथितयशसः प्रतिष्ठानगराधिपतेः पुरूरवसः अमानुषं रूपं दृष्ट्वा विमुह्य तेन सह समयं कृतवती, यन्मम एकतमस्योर्णायुशावकस्य यावत् न त्रुटिष्यति, भवतोऽपि असंयतावस्थं नावलोकयिष्यामि तावत् त्वत् सविधे निवसामीति।

ततो बहुतिथिं मानुषीभावेन राजभोगमुपभुञ्जमानाया इन्द्रादेशितेन विश्वावसुना रात्राविकमुरणशावकं चोरयितुं प्रचक्रमे। ततः शिशोर्भयव्याकुलरवमुपश्रुत्य निद्राविलसा सोर्वशी तदपहारिणि यथोपयुक्तां शास्तिं विधातुं राजानमनुरोरुध। तेनासंयतो विमानमार्गं गच्छन् राजा तड़ित्स्फूर्जनात् उर्वश्याः नयनपथवर्ती समजायत। तेनैव च सा अत्रान्तरे पूर्वप्रतिज्ञां स्मृत्वान्तर्दधे।

ततः प्रभृति उर्वशीविरहितः पुरूरवाः प्रमत्त इव पृथिवीमटित्वा बहुतिथिमन्तरेण अम्भोजसरसि सहचरीसमावृतां जलक्रीड़ारतां तां विलोक्य बहुप्रवेदितेन स्तवेन स्तुष्टिमनयत्। तेनापि च गन्धर्वाः अपि परितुष्टाः तस्मै उर्वशीसायुज्यवरमदन्; इति, यातु तत् पूर्वतनो कथा काव्यदृष्ट्या शिक्षणीयतया च अस्य काव्यस्य हृदये नास्ति क्षुद्रोऽपि सन्देहः, यन्महादेव्याः औशीनर्य्याः स्वामिनः पुरूरवसः उर्वश्यामासक्तिविज्ञानेऽपि तथाऽववादः एवातिविस्मयं माधुर्य्यञ्च समातनोति अभिनयदर्शकानां सभ्यानां चेतसि श्रुतौ चातिमात्रम्। तथा च औशीनरी रोहिणीसुसंगतं भगवन्तं चन्द्रमसं प्रार्थयति—'अज्ज प्पहुदि अज्जउत्तो जं इत्थिअं कामिदि जा अज्जउत्त समागमप्पणइणी, ताए सह अप्पदिबन्धेण वत्तिदव्वम्।' इति नैषा साधारणी वाणी योषितामितोऽन्यत् कमपि महत्त्वं स्वामिनं प्रति कर्त्तव्यञ्च विद्यते लवोऽपि।

काव्येऽस्मिन् यत्र तत्र औशीनर्य्याः समागमं संलभामहे, तत्र तत्रैव तस्याश्चरित्रस्य परमोत्कर्षं कोमलताञ्च विशेषेणावगच्छामः। चेटीमुखेन उर्वशीं प्रति राज्ञः अनुरागवार्त्तां विदितवत्यपि यत्गूढेन तत्तत्त्वं ज्ञातुमुपचक्रमे, स महिष्याः अप्राकृतजनस्यैव व्यवहारः राज्ञि च असीमप्रत्ययस्य प्रकृष्टप्रमाणम्। तथा चित्रलेखायाश्चरित्रचित्रणमप्यत्रातिसुन्दरं, यदा यदा हि तस्या सङ्गतिं संलभामहे, तदा तदैव तस्याः सुरसवाग्विभवेन वयं परितुष्टाः। तथा च अभिसारिकावेशिनोर्वशी विमानमार्गे चित्रलेखां पृच्छति—'सहि, रोअदि दे मे अअं मोत्ताहरणभूसिदो

णीलंसुअपुरिग्गहो अहिसारिआवेसो ?' इति, तदुत्तरे चित्रलेखा स्वल्पयैव वाचा आत्मनः प्रावीण्यं वचनचातुर्य्यञ्च दर्शयति—'णत्थि मे वाअविहवो पसंसिदुं, इदं तु चिन्तेमि, अवि णाम अहं एव्व पुरुरवा भवेअं ति।' इति

अहो! इतोऽन्यत् किं रमणीयं वर्णनं भवितुमर्हति नाट्य-जगति यत् स्त्रियः रूपं दृष्ट्वा तस्याः वल्लभो भवितुमिच्छति नारी, तदतिहृदयमेव कौशलेन कविः स्वल्पयैव वाचा प्रतिबोधयति सभ्यान्। तथापि वक्तुमुत्सहामहे यदेतस्य प्रधानपात्रस्य राज्ञः पुरुरवसः चरित्राङ्कने कविना किञ्चित् कार्पण्यमवतारितम्। येन दानवप्रमाथिनमसीमवीर्य्यशालिनं देवराजसखं राजानमुपस्थाप्य तस्य देवराजोपभोगसाधनीभूतायां तथाभूता आसक्तिः अतिदुर्बल-हृदयस्येव समधिकोन्मादभावः कस्याश्चित् वेश्यायाः कृते कथं नाम सानन्दमभिनन्दयामः?

एवञ्च चरित्रसंस्थापनायां नितान्तनिपुणोऽपि कविकालिदासः अनुरक्तायामौशीनर्य्यां राज्ञः निरुत्सुकत्वं तथानुरक्तमपि साधारणदोषेण परिहृत्य राजानरुर्वश्यास्तथाभावः, उर्वश्या विरहेण राजराजेश्वरस्यापि तथा उन्मादावस्था, राज्यचिन्ताविस्मृतिः इत्यादिबहुप्रकारावस्थासंस्थापनेन न तादृशं सौन्दर्य्यं परिस्फुरति चरित्राणाम्। राजप्रधानस्य पुरुरवसः कर्त्तव्यविस्मरणेन उन्मत्त इति परिकल्पनया च जायते साधारणेष्विव तत्र हीनताबुद्धिः।

अपि च उन्मत्तता इयं अलौकिकतामिव दधाना नास्माकं हृदयमधिकुरुते; एवमपि वयं अभिज्ञानशकुन्तलस्यश्लोकेन

समभितस्य बहुशः श्लोकानां सौशादृश्ये स्थितेऽपि न तादृशं मनो-हारित्वमस्य स्वीकर्त्तु' शक्नुमः, तेषां दिङ्मात्र' प्रदर्श्य संप्रति प्रतिनिवर्त्तिष्यामः। तथा च शकुन्तलादर्शनात् परं दुष्मन्तस्य

'गच्छति पुरः शरीरं धावति पश्चादसंस्थितं चेतः।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥'

इत्येवं वचसा मनोभावविकाशः एवाधिकतरं समुदारतया रमणीयतया च प्रतिभाति।

अहो! दुर्लभाभिलाषी मदनः 'एषा मनो मे प्रसभं शरीरात्' इत्यादि पुरूरवसो वचनेन तथा उदारता रमणीयता च। 'गच्छति पुरः शरीरम्' इत्येवं वादिनो दुष्मन्तस्य वचनेन वयं तस्य चित्तवृत्तिं मूर्त्तिमतीमिव समीपवर्त्तिनीमवलोकयामः। शकुन्त-लादर्शनेन राज्ञश्चित्त' तथा जड़तामवलम्बत तथा च शकुन्तलायां तस्यासक्तिरजायत यथा तां परिहाय तस्य कुतश्चिदपि प्रस्थानम-शक्यमिति श्लोकेनैव तथा प्रतीतिः। 'एषा मनो मे' इत्यादिना केवलम् उर्वश्या सह मम मनो गच्छतीति प्रतिपाद्य' न प्रकृता-वस्थोपस्थितिः। अपि च यथा शाकुन्तले श्लोकस्य कवित्व-माधुर्य्यं न तथात्रेति कृतं पल्लवितेन।

**संक्षिप्तेतिवृत्तम्**—अस्य तावत् प्रथमेऽङ्के—राज्ञा पुरूरवसा केशिदैत्येन हृतायाः उर्व्वश्याः समुद्धरणम्; तस्याः सखीभिः सह संगतिश्च; अत्रान्तरे सञ्जातपूर्वरागयोः राजोर्वश्योः स्वस्वालयं प्रति गमनम्।

द्वितीये—कामेन परिभूयमाने पुरूरवसि प्रमदवनस्थे तिरस्करिणीप्रच्छन्नायाः सचित्रलेखायाः उर्व्वश्याः स्वर्गादवतीर्य्य राज्ञे प्रेमपत्रदानं; अथ राज्ञानुवाचिते तस्मिन् विदूषकहस्तन्यस्ते सखीं संप्रेष्य स्वयमुपस्थानं, लक्ष्मीस्वयम्बररूपकाभिनेतुमाहूतायाः अपूर्णमनोरथायाः स्वर्लोकगमनम्; अथ प्रणष्टं मदनलेखमन्विष्यति राजनि दुर्भाग्यश्रवणकुपितया देव्या सह समायान्त्या औशीनर्य्या पथि वायुचालितस्य पत्रस्याधिगतिः। सा च लेखमर्पयित्वा भर्त्तुरनुनयं पादपतनञ्चापि उपेक्ष्य शुद्धान्तमभिप्रस्थिता, राजविदूषकयोश्च प्रस्थानम्।

तृतीये—विष्कम्भके भरतशिष्ययोः संवादे इन्द्रालयप्रयुज्यमानलक्ष्मीस्वयम्बरे वारुणीभूमिकया मेनकया 'कस्मिंस्ते हृदयाभिनिवेशः' इति पृष्टा लक्ष्मीभूमिकोर्वशी 'पुरुषोत्तमे' इति वाच्ये प्रमादात् 'पुरूरवसि' इति उक्तवतीति कुपितेन भरतेन 'न ते दिव्यं स्थानं भविष्यति' इति अभिशप्ता पुनर्महेन्द्रेण 'यथाकामसमापुत्रमुखदर्शनं तं मे समरसहायं सखायमुपतिष्ठस्व' इत्यनुकम्पितेति कथांशः प्रकाशितः; मणिहर्म्यपृष्ठे राज्ञि विदूषके समागते प्रभावपिहितायाः सखीद्वितीयायाः उर्वश्याः अभिसारवेशेन, देव्याः औशीनर्य्याश्च प्रसादनव्रतव्यपदेशेन तत्र गमनम्; रोहिणीसंगतं चन्द्रमसं कञ्चुकिविदूषकौ राजानञ्चाभ्यर्च्य तस्याः प्रतिगमनम्, उर्वश्या राज्ञः समीपे आगमनम्, चित्रलेखायाः स्वर्गारोहणञ्च।

चतुर्थे—कुमारवनं प्रविष्टाया उर्वश्याः लताभावकीर्त्तनम्, सङ्गमणिश्च तन्मोचोपाय इति कथनञ्च; विरहविधुरस्य राज्ञः

मेघ-मयूर-पिक-मराल-मधुकर-करि-शैल-सरित्--सारङ्ग--नीपेषु प्रियोदन्तजिज्ञासानन्तरं सङ्गममणिमधिगत्य लताभूतां प्रियामालिङ्गतः शापमुक्तया तया सङ्गमश्च।

पञ्चमे—गृध्रेण सङ्गममणिहरणम् ; कुमारस्यायुषः समागमः पित्रा परिचयश्च, तद्दर्शनप्रमुदितेन राज्ञा समाहूतया उर्वश्या विषादः, वनप्रस्थानाय कृतोद्यमे पुरूरवसि नारदेनागत्य महेन्द्राज्ञा ज्ञापिता, तेनायं राजायुषं यौवराज्येऽभिषिच्य उर्वश्या सह ससुखमध्युवासेति वर्णितम्।

**नायकादिसिद्धान्तः**—नायकश्चात्र पुरूरवाः शठो धीरोदात्तः ; रक्ताभिसारिका दिव्या साधारण्युर्वशी, कलहान्तरिता मध्या धीरा स्वकीयौशीनरी च नायिके चालम्बनविभावाः। मलयानिलचुतमुकुलादयः उद्दीपनविभावाः, परस्परसंवादाक्षिविक्षेपादयश्चानुभावाः; आवेगौत्सुक्योन्मादचिन्तादयो व्यभिचारिणः, रतिः स्थायी, सम्भोगशृङ्गारोऽङ्गी, हास्यविप्रलम्भादयोऽङ्गरसाः, विदूषकादयः सहायाः, रीतिः पाञ्चाली, गुणो माधुर्याख्यः, प्रस्तावना प्रयोगातिशयाख्या, दूती चित्रलेखा निसृष्टार्था इति।



## महावीरचरितसमालोचनम्—

महावीरचरितं हि नाम नाटकं नाट्यनिवहेषु परमहृद्यं सहृदयानाम्। एतत् खलु काव्यं महामहिम्ना श्रीकण्ठोपाधिकेन भवभूतिना कविना प्रणीतम्। अस्य तावत् कवेः रचना-नैपुण्यं नाटकस्य प्रत्यङ्गेषु अन्वर्थनाम्ना प्रतिफलितम्। एतस्य च स्थानेषु भीतिः, स्थानेषु उत्साहः, स्थानेषु च प्रतिपक्षनिराकरण-प्रवृत्तिः साधारणानामिवातिमात्रं मोहयत्यतितराम्। रामस्य शान्तभावेन वनप्रस्थानम्, अकातरतया साम्राज्यपरिहारः, महा-महिमशालिनोऽपि विनयनम्रता, लक्ष्मणस्य भरतस्य च भ्रातृ-प्रेम, गुरूणां स्नेहः, तपसाञ्च तेजः इत्यादि यथायथमवस्थापनात् प्रत्यक्षमेव समीक्षन्ते अभिनयसमक्षकारिणः सामाजिकाः। तथाहि—

'ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।
जामदग्न्यश्च वो मित्रमन्यथा दुर्मनायते॥'

इति शूर्पणखोक्तिषु नीतिपथावतरणं बालिप्रभृतीनां परशुरा-मरामयोरुक्तिप्रत्युक्तिषु च तथा वीररसावतारः, यथा रामस्य विनयो न व्याहन्यते लवमात्रम्, तथा हि रामः—'भगवन्, परिरम्भणमिति प्रस्तुतप्रदीपमेतत्' 'अकलिततपस्तेजोवीर्य-प्रथिम्नि यशोनिधौ' इत्यादौ 'विनययुक्तवीररसस्य सुष्ठु सुषमा-वेशयति कविवरः। सीतोपदेशावसरे च यदा रामः—'मुनि-

रयमथ वीरस्ताद्दशस्तत् प्रियं मे' 'विरमतु परिकम्पः कातरे, क्षत्रियासि' इत्यादौ च यथा वीररसावष्टम्भः अभिनयदर्शकार्थिनां मनांसि रसभावधारया परिप्लाव्यते। मन्ये तादृक् काव्यकलासुसमावेशनमाधुर्य्यमन्यत्र सुदुर्लभम्। तथा 'न त्वस्तं यदि नाम भूतकरुणासन्तानशान्तात्मनः' 'यत् क्षत्रियेष्वपि पुनः स्थितमाधिपत्यम्' 'साधु राजपुत्र, साधु सत्यमैक्ष्वाकः खल्वसि—अन्विष्यतः प्रमथनाय' इत्यादि स्थलेषु महावीरचरितमिति नाम्नः सार्थकतां निनाय तत्रभवान् भवभूतिर्नाम कविकुलैकभूतिः। यद्यपि च विद्यन्ते बहुला एव सामाजिकानां प्रमोदोत्कर्षज्ञापका गुणांशास्त्रात्र, तथापि वक्तुमुत्सहामहे यत् रामायणादिविरुद्धस्वकपोलकल्पितकथांशनिबन्धनेन स्थितिसंस्कारवैपरीत्यं, रसविकाशावकाशे च विरुद्धरससमावेशेन रुचिमालिन्यं, दीर्घसमास-प्रायाप्रसिद्ध शब्दप्रयोगाद्विरलप्रसादतयार्थावबोधदुष्करत्वम्, प्रस्तुताप्रस्तुतयोर्गौरवलाघवविपर्य्यासेनातिप्रचुरपद्ययोगेनापि रसोद्बोधबाधश्च समुपजायते नाट्यकलाविकाशे समीक्षकारिणां चेतसि किञ्चिन्मात्रम्।

तथाहि प्रथमतः सीतोर्म्मिलाभ्यां सह कुशध्वजस्य विश्वामित्राश्रमपदगमनं, तत्र च रामेण कौशिकवाक्यादाविर्भूतस्य हरधनुषो भङ्गः, परतो जामदग्न्यस्य जनकान्तःपुरप्रवेशः, मन्थरादेहानुविष्टया शूर्पणखया कृत्रिमकैकेयीलेखेन रामप्रतारणम्, मिथिलायामेव रामराज्याभिषेकोद्योगः, जनकभवनतो रामचन्द्रस्य वनगमनम्, प्रजानां तदानुगत्यम्, सुग्रीवेण सौहार्द्दम्,

द्वन्द्वयुद्धे वालिहननम्, सङ्ग्रामायोधने मेघनादवधश्चेत्यप्रसिद्ध-वृत्तान्तपरिकल्पनया स्वयं काव्यमुखे च—

'प्राचेतसो मुनिवृषा प्रथमः कवीनां
यत् पावनं रघुपतेः प्रणिनाय वृत्तम्।
भक्तस्य तत्र समरंसत मेऽपि वाच-
स्तत् सुप्रसन्नमनसः कृतिनो भजन्ताम् ॥'

इति श्लोकेन यत् भगवतो वाल्मीकेः पदपंक्त्यनुसरणमेवाङ्गीकृतं तदपाक्रान्तं कविना श्रीकण्ठेन। अपि च उत्तररामचरिते एतस्यापि वृत्तान्तघटितचित्रदर्शनप्रस्तावे चित्रितस्यापि रामस्य यत् 'अनादरखण्डितशङ्करशरासनः' इति श्लोकेन मिथिलायामेव हरधनुषोःभङ्गप्रक्रमो निर्देशितः, परतश्च 'भवत्वन्यतः [मिथिलावृत्तान्तेतरप्रदेशालेख्ये] सञ्चारयामि' इत्यनन्तरं 'अयञ्च भगवान् भार्गवः' ततश्चानतिदूरे 'एते वयमयोध्यां प्राप्ताः' इत्यादि वचसा मिथिलायोध्ययोर्मध्यमार्गे जामदग्न्यस्य सङ्गतिः कथञ्चिदनुमापितः। एवं 'एषा मन्थरा...' 'अये मध्यमाम्बावृत्तान्तोऽन्तरित आर्य्येण'।

इत्यादिकथया अयोध्यायामागतस्य रामस्य कतितिथावपचिते कैकेयीवचनेन वनगमनमस्माभिरुपलभ्यते। चन्द्रकेतुलवसंवादे च 'यद्वा कौशलमिन्द्रसूनुनिधने' इत्यादिपद्येन वालिनो गुप्तहननञ्चेति रामायणीकथायाः यथावदङ्गीकृतम्। अत्र तावत् तत्भङ्गनाम्नो वचनविरोधो बाहुल्येन घटते।

एवमपि च नाटकस्य यत् : प्रथमाङ्के सीतारामयोरूर्म्मिला-लक्ष्मणयोश्च समुत्पन्ने नयनाभिरामे शृङ्गारे ताड़कावृत्तान्तेन बीभत्सभयानकयोरवतारणं, तथा द्वितीये शुद्धान्तःपुरमाविशता भार्गवेणाहूयमानस्य तदन्तिकमुपसर्पतः कल्याणोदर्कस्यापि रामचन्द्रस्य वैदेह्यागमनबाधावतारस्तस्यां तत्कालानुचितशृङ्गाराविर्भावश्च। तथा जामदग्न्यरामयोरुपचीयमाने वीरवृत्ते सहचरीभिः सीतायाः शृङ्गारोद्बोधनमुपारूढ़े च रामस्य कङ्कणमोचनाय गमनं विशेषेण रसस्यापकर्षं जनयते।

अप्रस्तुतस्य माल्यवन्मन्त्रणस्यातिविस्तृतिं प्रस्तुतस्यापि लङ्कावृत्तस्य च सङ्कोचनं सर्व्वथैवानुचितमिति सहृदयानां हृदयम्। तथापि नाटकेऽस्मिन् महर्षेर्वाल्मीकेः परिकल्पितानां निखिलादर्शभूतानां रामादिपात्राणां भूयश्चरित्रालोचनावसरे समुदेति स्वत एव भार्गवस्य चरित्रमस्माकं नयनपथे तस्यैव क्षत्रियान्तकृतो वागुपन्यासेन एवमेव जायते प्रत्यभिज्ञा यदयं मूर्त्तिमानिवाभिमानः समीपमस्माकमवतरति कस्मादप्यज्ञातदेशात्, स एव खलु दानवीर इति श्रूयते जनश्रुतिरपि, श्रूयते च महावीरचरितवाक्येषु तदेवेति युद्धवीरस्य प्रतिपादिनोऽयं कविना श्रीकण्ठेन, तथाच दानवीरत्वं युद्धवीरत्वञ्च एकीभूय तस्य तथागर्वः प्रतिभाषते, यथा सर्वसारमिव उपादानत्वेनोपादाय परिनिर्म्मितोऽयं विधिनेति।

प्रथमतः 'भो भोः परिष्कसाः, क्व रामो दासरथिः ?' इति साधारण्येव कथया तस्य वीराभिमानः बाहुल्येन प्रतीयते। देवतेजोमयं धनुः धनुर्गुरोर्म्महादेवस्य रामो बभञ्जेति समाकर्ण्य

समधिकाभिमानदृप्तान्तरः श्रीरामचन्द्रमेवाहवेऽवतर्त्तुं मयाह्वयते। नैतत् साधारणं वीर्य्यावमर्षणं नाम तदा परशुरामस्तथा चिन्तितवान्, यदहं कार्त्तवीर्य्यविजेता महादेवो मे गुरुः वसुन्धरां क्षत्रियजातिबहुलामपि प्रायो निःशेषितक्षत्रियामेवाकरवम् ममापि नाम गुरोश्चापं कश्चित् क्षत्रियो बभञ्जेति दुःसहमिदं श्रुतिकठोरं नाम तन्नूनमस्य वीर्य्यमहं विध्वंसयिष्ये; तदाभाससंसृष्टवचनञ्च, 'एष मे प्रशमस्य कर्कशः परिणामः,—

'अन्विष्यतः प्रमथनाय ममापि दर्पादात्मानमर्पयसि
जातिविशुद्धसत्त्वः ।
गन्धद्विपेन्द्रकलभः करिकुम्भकूटकुट्टाकपाणिकुलिशस्य
यथा मृगारेः ॥'

'यत् क्षत्रियेष्वपि पुनः स्थितमाधिपत्यं तैरेव सम्प्रति
धृतानि पुनर्धनूंषि ।
उन्मादयता भुजबलेन मयापि कष्टमुच्छृङ्खलानि चरितानि
पुनः श्रुतानि ॥'

इत्यत्र ममापीति वादेन लोकोत्तरवीर्य्यवत्ता भार्गवस्य स्फुटत एव प्रतिभाति। लोकोत्तरवीर्य्यशालिनो ममापि यस्त्वमात्मानमर्पयसि तन्नूनं मरणमेव ते निश्चितमिति मन्यमानस्य शतशः आत्माभिमानरेखेव हृदयमुपास्ते। 'प्रहरणमयचापम्' इत्यादौ 'क्व पुनर्वत्स, मया गन्तव्यम्?' इत्युत्तरेण 'यत्र तातश्च जनकश्च अथवा शान्तं यत्र भगवन्तौ वशिष्ठ-

विश्वामित्रौ' इति रामेणोक्तो परशुरामः—'इदमिदानीमशक्य-मनतिक्रमणीयश्च राजनिर्द्देशः, भगवन्तौ वशिष्ठविश्वामित्रौ, स एष रामः सम्यत्वादचण्डश्चण्डविक्रमः। यस्य प्रतिष्ठितं जैत्रं जामदग्न्येऽपि शासनम्॥' इत्यादि वचसा तस्य सकल एव हृदयभावः शान्तभावेनैव परिस्फुरति। 'ब्राह्मणातिक्रमत्यागो' इत्यादिश्लोके च तस्य चरित्रस्य गभीरता सहृदत्वैव तेजोभिमानसम्पत्तिर्विकाशते। वस्तुतः नाटकेऽस्मिन् श्रीकण्ठपरिकल्पितो भार्गवः यदा यदास्माकं दृष्टिपथवर्त्ती जायेत, तदा तदैव तस्य रौद्रोज्ज्वलं वेशं समीक्ष्य वयं प्रमुग्धाः, यथार्थमिव भार्गवचित्रमाकलय्य मानसमन्दिरमानन्दधारया जनयत्यविरलां प्रीतिं नाट्यसंसदुपगतानां सभ्यानां चेतसीति कृतं रामरामयोः संवादसंवाहिनीपुण्यतमायाः कथायाः विस्तारेण।

**संक्षिप्तेतिवृत्तम्**—प्रथमेऽङ्के—कौशिकाश्रमे सीतोर्म्मिलाभ्यां समागतेन कुशध्वजेन रामलक्ष्मणानुगतस्य विश्वामित्रस्य संवादः, सीतारामयो रुर्म्मिलालक्ष्मणयोश्च लोचनप्रीतिः, रावणदूतेन रावणार्थं सीतायाः प्रार्थनम्, रामेण ताड़काहननम्, जृम्भकास्त्राधिगतिः, तदाश्रमे विश्वामित्रवचनेनाविर्भूतस्य हरधनुषो भङ्गः, मुनिना दशरथसमीपे कुमाराणां विवाहवार्त्ताप्रेरणम्, सुबाहुमारीचं निर्ज्जेतुं रामलक्ष्मणयो र्गमनञ्च, विष्कम्भके शूर्पनखया माल्यवतोऽर्थचिन्तनम्, दण्डकायां विराधदनुकबन्धादीनामभिचारनिवारणाय भार्गवसन्देशाधिगतिः, रामविनाशाय जामदग्न्यमुत्तेजितुं गमनञ्च।

द्वितीये—राघवान्वेषिणो जामदग्न्यस्य जनकान्तःपुरप्रवेशः, तदागमनसम्भ्रान्तया सखीसमितया सीतया रामस्य संलापः, तदैव तत्रागतयो र्जनकशतानन्दयो स्तस्य च परशुरामेण संवादः, कङ्कण-मोचनाय रामस्यान्तःपुरप्रवेशः, जनकशतानन्दभार्गवाणां वशिष्ठ-विश्वामित्रान्तिके गमनञ्च ।

तृतीये—वशिष्ठविश्वामित्राभ्यां जामदग्न्यप्रसादनप्रयासः, सर्वथैवाप्रसन्नमसुमभिशप्तुं समुद्यते शतानन्दे दशरथवचनात् वशिष्ठेन तत् प्रशमनम्, जनकदशरथविश्वामित्राणां परशुरामेण सह तर्जितवचनानि, ततः समुपागतेन राघवेणास्यायोधनाय प्रस्थानञ्च । विष्कम्भके - रामस्य भार्गवविजयः, शूर्पणखया सह माल्यवतो रामवधचिन्तनं, तयोः सीताहरणसङ्कल्पः कार्य्योद्धाराय गमनञ्च ।

चतुर्थे—वशिष्ठविश्वामित्रजनकदशरथानामभिनवविजयसङ्कथा रामरामयोरन्योन्यापराधक्षमापणम्, मन्थराशरीराविष्टया शूर्प-णखया भरतराज्याभिषेकचतुर्द्दशवर्षावधिकरामनिर्वासनरूप-वरद्वयप्रार्थनमयेन कृत्रिमकैकेयीलेखेन प्रतारितस्य रामस्य तदङ्गीकरणम्, रामाभिषेकाय कृतोद्योगिना दशरथेनार्थिने दास-रथाय मात्रयाचितवरद्वयप्रदानम्, तदुपश्रुत्य तथेत्यनुमन्तारं सत्यसन्धं तातं श्वशुरञ्च शोकसागरे निमज्ज्य भरताय पादुका-मर्पयित्वा सीतालक्ष्मणेनानुगतेन रामेण विराधं हन्तुं शृङ्गवेर-पुरमभिप्रस्थानञ्च । विष्कम्भके सम्पातिजटायुःसंवादे विराधवधा-नन्तरं तस्य चित्रकूटात् शरभङ्गाश्रमगतिः, कृताग्निप्रवेशे च

शरभङ्गे पञ्चवटीवासः, लक्ष्मणेन शूर्पणखायाः कर्णनासोः कर्त्तनम्, रामेण सानुचराणां खरदूषणत्रिशिरसां हननं, रावणापह्रियमाणां सीतामुद्धर्त्तुं जटायुषोऽभियानम्।

पञ्चमे—सीताजटायुःशोकविह्वलयोः रामलक्ष्मणयोः राक्षसबधसंकल्पः, लक्ष्मणनिहतस्य दनुकबन्धस्य दिव्यलोकप्राप्तिः, श्रमणाहस्तेन रामस्य विभीषणलेखप्राप्तिः, ऋष्यमुखाभियानं, पादेन दुन्दुभिदैत्यास्थिसञ्चयक्षेपः, बालिबधः, तद्वचनेन विभीषणसुग्रीवयोः सख्यलाभश्च, विष्कम्भके—माल्यवत्समीपागतया त्रिजटया हनुमत्कृतलङ्कादाहाक्षबधसीताभिज्ञानाहरणवृत्तान्तकथनम्।

षष्ठे—मन्दोदर्य्या रावणाय सागरबन्धाद्यभियोगाविदनम्, रामेण लङ्कावरोधः, अङ्गदप्रेषणम्, रावणस्य युद्धनिर्य्याणम्, प्रबुद्धरामलक्ष्मणयोः प्रबोधनाय हनुमतो द्रोणशैलानयनम्, कुम्भकर्णमेघनादरावणादिवधवृत्तान्तकथनञ्च, नेपथ्योक्त्या विभीषणराज्याभिषेकः, सीताग्निशुद्धिः, रामस्य पुष्पकाधिगतिश्च।

सप्तमे—रामनिदेशेन सर्वबन्धमोक्षः, पुष्पकेणायोध्यायात्रा, लङ्कातोऽयोध्यान्तर्वर्त्तिपथकीर्त्तनं, भरतशत्रुघ्नयोः समागतिः, रामस्य राज्याभिषेकश्च।

**नायकादिसिद्धान्तः**—अत्र नायको रामचन्द्रो धीरोदात्तः, प्रतिनायको रावणश्चालम्बनम्, नायिका सीता स्वकीया मुग्धा नायकश्चानुकूलोऽसौ च शृङ्गारालम्बनम्, परस्परतर्ज्जितवाक्यादीनि, उद्दीपनानि, साटोपपरिक्रमणभ्रूकुट्यादयोऽनुभावाः, उत्साहः स्थायी, युद्धवीररसोऽङ्गी, शृङ्गारकरुणबीभत्सरौद्रादयो-

ङ्गरसाः, लक्ष्मणसुग्रीवौ पीठमर्दसहायौ, रीतिर्गौड़ी, ओजो-
नाम गुणः, प्रस्तावना प्रयोगातिशयरूपा, दूतौ राक्षसाङ्गदौ
सन्देशहारकौ इति।

---

## अनर्घराघवसमालोचनम्—

इह तावत् सभ्यजगति प्राचेतसमहामुनेर्वाल्मीकस्यामृत-लेखनीनिस्यन्दितस्य रामायणमहोदधेः सकलसारभूतस्य सूर्य्यकान्तमणेः पूतं रामस्य चरितमवलम्ब्य कालिदासभट्टिप्रभृतयः प्राचीनकविवर्य्याः महाकाव्यानि; हनुमद्भवभूतिराजशेखर-मुरारिजयदेवप्रमुखाः सत्कवयः दृश्यकाव्यानि महानाटकवीर-चरितोत्तररामचरितबालरामायणानर्घराघवप्रसन्नराघवनामानि नाटकानि व्यरचयन्। वस्तुतः सर्वादर्शसारमयस्य महातरोः रामायणस्य यं कमप्यंशमवलम्ब्य येन केनाप्यवतारि ग्रन्थः; स एव सुखे वा दुःखे वा सकलकार्य्यावशिष्टपितृपतिपरिगृहीत-शेषदशायां वा मन्दाकिनीचरितानघत्रितापहारिणीवारिधारेव उच्चैरुच्चतरं समानयति गोब्राह्मणवात्यतिपातकिनमपि श्रवणात् स्वर्गराज्यम्। अपि च तस्य समाश्रिता कथा सर्वास्वप्यवस्थासु प्रमोदमुत्पादयति सहृदयानां हृदयनिकेतनेष्वत्यतिमात्रमत्र जगति। एवमुक्तञ्च कविना—

"वश्यवाचः कवेः काव्यं सा च रामाश्रया कथा।
लब्धश्च वाक्यनिष्यन्दनिष्पेषनिकषो जनः॥" इति

अप्यहो! कविनिर्म्मितेष्वेष्वपि नाटकेषु अनर्घराघवं नाम नाटकमन्यतमम्। अत्र च स्थलविशेषे महाकविना भवभूतिना प्रस्तुतवीरचरितात् कविप्रधानराजशेखरविनिर्म्मितबालरामायणा-ज्जयदेवादिकविरचितग्रन्थाच्च किञ्चिद्विशेषमवलोक्यते।

नूनं तावद् येनात्र केनचिदनुत्कीर्णपथमाश्रयतां प्रच्छावता-मुत्कर्षापकर्षप्रतिपच्चभाविन, नितरां नवनवत्वमसुलभं, किन्तु विद्वत्प्रवरनिकरैर्बहुभिः प्रयतमानैरपगतमलानां मध्यन्दिनगता-र्चिष्वतामिव बहुभिर्व्विघट्टमानानां कीर्णमलानां प्रोज्ज्वलन्मणीनां विशेषोत्कर्षं वितनुमनेकैरेवालं श्रूयते। तत्र चेत् कृतविद्या विद्वन्मुख्या विषयान्तरेण तन्नियोक्तुमर्हन्ति, त एव तत्र पाण्डित्यगुणैर्निकषायमाणाः सम्वृत्ताः। एतदेव पदवीमारुह्य कविरयं मुरारी-रामायणानुप्राणितमनर्घराघवं नाम नाटकं प्रणीय लोकेषु कवियशोऽत्यतितरामालेभे। अपि नामास्य प्रकर्ष-त्वमुपलभ्यासूयाप्रणोदितया केचित् पण्डितम्मन्याः किमु कवि-यशः प्रस्तोतुं के वा महात्मनः "मुरारे स्तृतीयः पन्थाः" इति प्रवादवादमुद्घोषयन्ति। यातु तावज्जनश्रुतिः। किन्तु कष्टं कवेरस्य वंशमर्य्यादादि नाटकस्यैतस्य प्रस्तावनामन्तरेण कस्मा-दपि विस्तरशः ज्ञातुमलं स्मः। अस्ति तत्र मौद्गल्यगोत्र-सम्भवो महाकविर्भट्टश्रीवर्द्धमानतनुजन्मा तन्तुमतीनन्दनो मुरा-रिरिति।

मन्यामहे प्रचलितरामायणदृश्यकाव्येषु महानाटकं विहाय भवभूतिविनिर्म्मितं वीरचरितमेव ज्येष्ठम्। तस्य समयश्च

प्रत्नतत्त्वविशेषज्ञेन भाण्डारकरेण खृष्टीयाष्टमशकस्य प्रथमार्द्धं निरूपितः। अपरेण बालरामायणस्य रचयिता राजशेखरनाम्ना प्रसिद्धेन कविद्वयेनावृत्तत्रत इत्यनुमीयते कैरेव पुरातत्त्वविद्भिः सविशेषम्। तयोरेकस्तावत् प्रसिद्धदृश्यकाव्यरचयिता विद्ध-शालभञ्जिका नाम नाटिका, प्रचण्डपाण्डवापरनामकं बालभारतं, बालरामायणञ्चेति त्रीणि संस्कृतभाषामयाणि दृश्यकाव्यानि तथा प्राकृतभाषागुम्फितां कर्पूरमञ्जरीनाम सट्टकञ्च निर्म्मित-वान्। स हि खृष्टीयाष्टमशकस्य मध्यवर्त्ती। अपरस्तु कवीनां प्रशस्तिगाथारचयिता तत्परवर्तीति बहुप्रमाणैः प्रमाणितं तैरेव पण्डितैः। एवं किल कविप्रशस्तिगाथासु राजशेखरकृतित्वेन प्रसिद्धः—

"भासो रामिलसोमिलौ वररुचिः श्रीसाहसाङ्कः कविः
　　मेण्ठो भारविकालिदासतरलाः स्कन्धः सुबन्धुश्च यः।
दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः
　　सिद्धा यस्य सरस्वती भगवती के तस्य सर्व्वेऽपि ते॥"

इत्यादि श्लोके रत्नाकरस्य नाम समुल्लिखितम्। स हि कविः खृष्टीयनवमशके प्रादुर्भूतः; नितरां तच्छ्लोकरचयिता राज-शेखरस्तत्परवर्त्त्येव नास्ति तत्र कोऽपि विकल्पावकाशः। प्रसन्न-राघवरचयितुर्गीतगोविन्दरचयितुश्च जयदेवयोः एक एव समयः। तयोस्तु खृष्टीयैकादशशततमषोड़शशकः समयः। तत्पूर्ववर्त्ती समयः एव राजशेखरकवेः, परवर्त्ती समयश्च मुरारेरित्यस्माकं हृदयं स्फुटमेव प्रत्याययति भाषागाम्भीर्य्यादिना। निजसमयस्तु

कविना सूत्रधारमुखेन स्वयं वाचितम्—"अयं प्राचेतसीयं कथावस्तु बहुभिः प्रणीतमपि प्रयुञ्जानो नापराध्यति" इति, तत्र खलु कवेर्बहुभिरिति व्यावहृतत्वेन तत्पूर्ववर्त्तिनोऽनेके कवयः सन्तीति सहजप्रज्ञयैव वाढ़ं प्रतिभाषते। एवञ्च यथोत्तररामचरिते प्रथमाङ्के—

'जामातृयज्ञेन वयं निरुद्धास्त्वं बाल एवासि नवञ्च राज्यम्।
युक्तं प्रजानामनुरञ्जनेस्यास्तस्माद्यशोयत् परमं धनं वः॥'

इत्यादिना रामं प्रतिज्ञाय कविना जानकीनिर्व्वासनं सूचितं तथात्रापि वामदेवं प्रवेश्य—

"हुतमिष्टञ्च तप्तञ्च धर्म्मश्चायं कुलस्य ते।
गृहात् प्रतिनिवर्त्तन्ते पूर्णकामा यदर्थिनः॥"

इत्यनेन पुत्राधिगतप्राणं दशरथं तादृशमेवाङ्गीकार्य्य कौशिकाय क्रतुसम्पादनार्थं रामलक्ष्मणौ प्रहिताविति।

कैः कैरेवास्य प्रसादगुणराहित्यमुक्ताभिनयेऽनुपयोगित्वमनुमन्यते, तन्न साधु वक्तुमुपयुज्यते। यतो हि प्रथमाङ्के वामदेवदशरथप्रभृतीनामुक्तिषु—

"कौशिकस्वीकृतस्यापि यदाज्ञाति क्रमादभूत्।
त्रिशङ्कोरुपयोगाय न द्यौरपि न भूरपि॥"

"यश स्तोमानुच्चैरुपचिनु चकोरप्रणयिनो
रसज्ञापाण्डित्यच्छिदुरशशिधामभ्रमभरान्।
अपि तत्तेजोभिस्तमसि शमिति रचतु दिशा-
मसौ यात्रा मैत्रीं नभसि नितरामम्बरमणिः॥"

इत्यादि प्रशस्तिगाथासु ललितपदोपन्यासेन सकलकविजनेषु कविरयमभिनवशान्तमधुरगम्भीरया गिरा सत्यसन्धं दशरथं महतीमहत्तरमुन्नयति। द्वितीयाङ्के—विश्वामित्रेण सह रामलक्ष्मणयो र्गमनानन्तरम्—

"तमोभिः पीयन्ते तातवयसि पीयूषवपुषि"

इत्यादिभिः श्लोकैः प्रभातवर्णनच्छलेनादित्यस्य क्रमविकाशं समुपन्यस्य कौशिकशिष्ययोः शुनःशेफपशुमेढ्योः शिचिताशिक्षितयोः कथाच्छलेन च नाटकीयवस्तुसंक्षिप्य मध्यं दिनावधि रामलक्ष्मणाभ्याम्—"उद्याम द्युमणिद्युतिव्यति करप्रक्रोड़दकोपलज्वालाजालजटालजाङ्गलतटीनिष्कूजकोयष्टयः।" "यातोस्तमेष चरमाचलचूड़चुम्बी पङ्केरुहप्रकरजागरणप्रदीपः।"

इत्यादिश्लोकैरामुखं रजन्याः सूर्य्यास्तं निर्व्वर्ण्य "पौलोमीकुचकुम्भकुम्कुमरजः-स्त्राजन्यजन्मोज्ज्वता शीतांशोर्य्यूतयः पुरन्दरपुरि सीम्नामुपस्कुर्वते।"

इत्यादि श्लोकैः रात्रिवर्णनक्रमेण च निशाकरवर्णनयान्यकविजनापेक्षयास्य समधिककविगुणत्वमनुमोयतेऽनेकैरेव सहृदयैः। वस्तुतः ताड़काबधमारभ्य जाजदग्न्यविजयं यावत् सुशोभनं नाटकीयवस्तूपस्थापितं कविना। चतुर्थेऽङ्के—माल्यवदुक्तौ—

"प्रभाते पृच्छन्तीरगुरहसवृत्तं सहचरी
नवोढ़ा न व्रीड़ासुकुलितमुखीयं सुखयति।
लिखन्तीनां पत्राङ्कुरमनिशमस्यास्तु कुचयो-
श्चमत्कारो गूढ़ं करजपदनासां कथयति॥"

इत्यादिश्लोकैः रसमुपस्थाप्य सुखायते सततं काव्यरसरसिकानां हृदयम्। अपिनाम गूढं मन्त्रयमानयोः शूर्पणखामाल्यवतो रघुवंशकौटिल्यनयच्छद्मना ससीतलक्ष्मणं राघवं चतुर्दशवर्षं वनोपस्थाप्य सम्पराकैकेय्योः रामारण्यनिर्वासनदूषणमपि कौशलेनापनीतम्—

"रक्षोभिचारचरुभाण्डमिव स्तनं यो देव्या विदेह-
दुहितुर्विददार काकः।
ऐषीकमस्त्रमधिकृत्य तदा तमक्ष्णोः काणीचकार
चरमो रघुराजपुत्रः॥"

इति श्लोकपाठेनास्माभिरण्यकविविरचितनिबन्धतोऽधिकसत्त्वोपलक्ष्यते। एवं परस्परविवदमानयोर्वालिरामयोः सम्पराये प्रशंसामिषेण सोल्लुण्ठनोक्तिभिरोजस्विभिः पद्यैः काव्यरसरसिकहृदयतन्त्री प्रतिनियतं विताड्यते परिवादिनीविलग्नतन्तुरिवात्र प्रजगति। अपि नूनमुभयोः सम्मुखयुद्धे संप्रवृत्ते शरनिहते कपीन्द्रे गुप्तहननसंस्पृष्टदोषोच्चयोऽपि निराकृत एवासीत् रामचन्द्रस्य। षष्ठेऽङ्के—वियच्चराभ्यां रत्नचूड़हेमाङ्गदाभ्यां गद्यपद्यमय्यार्जवगिरा प्रसिद्धं रामरावणयो युद्धं विन्यस्याभिनयदर्शकानां चेतसि वास्तववस्तूपयोगमिव नाटकीयरससन्निधानात् सत्यमेव धन्यार्हः कविः प्रच्छावताम्। सप्तमेऽङ्के—सुग्रीवविभीषणसहचरो विजयाभिरामो रामः ससीतलक्ष्मणो विमानेन दशास्यपुरमभितः सरित्पतिं हेतिरङ्गस्थलञ्च विदेहराजपुत्र्यै दर्शनमिषेण सविशेषं निर्वर्ण्य वामतो विन्ध्यं पुरतो महासेतुं दर्शयन्

स्वजनविस्मयानन्दसन्दोहामृतरसैराप्लुवन् हिमगिरेः प्रान्तोपात्यकाधिदेशमधिरुरोह ।

अपि नाम तत्रत्यपुरान्तर्निहितचेतो हरनयनत्विषा भस्मावशिष्टमीनकेतोरधित्यकामुपेत्य शम्भोः पार्थिवमूर्त्तिचतुष्टयं निर्व्वर्ण्यार्द्धनारीश्वरं चन्द्रचूड़ं स्तुवन् क्षीरोदार्णवविघट्टनदण्डं महाशैलमनुकृत्य तुषारचयचर्च्चितचित्रकान्तं स्फटिकमणिगणोद्गीर्णगर्भशीतांशु च्छायाच्छदि निकेतनासितपदविश्रान्तगायत्प्रमथगणाराधितदेहं शैलेशं कैलासं संविवेश। तत्र धूर्जटिजटाजालयुष्टाब्जखण्डमण्डिनोद्भाषितांशुभिर्नयनयोः प्रीतिमावहन् चन्द्रमण्डलमुत्तीर्य्य क्रमेण पारावारोर्द्धनभसा जलधरपटलोर्द्धधोभावेन सिंहलं रोहणगिरेरधित्यकागस्त्याश्रमं ताम्रपर्णीं मलयाचलं दण्डकारण्यं गोदावरीं महाराष्ट्रैकमण्डलं कुण्डिननगरं द्राविड़जनपदं काञ्चीनगरं त्रिपुरदहनाधिष्ठानप्रतिष्ठमहाकालसनाथामुज्जयिनीं सागरसङ्गमितां गङ्गां वाराणसीं मिथिलां चम्पानगरीं गङ्गयमुनासङ्गमितं प्रयागतीर्थञ्च विचार्य्यायोध्याराजधानीं प्रत्यागमत्। तत्र यथायोग्यभ्रातृसम्भाषणानन्तरं वशिष्ठेनाभिषिच्यमानो रामचन्द्रः सिंहासनमधिरुरोह। इत्यन्तं यावन्नवीनया दिशानन्यसाधारणं ललितमधुरपदोपस्थाप्य रामप्रत्यावृत्तपथाविष्करणेन च प्रीणाति जनमनांसि कविरयम्।

नूनमहो! एष्वपि गुणेषु वर्त्तमानेषु भौगोलिकपर्य्यायेण लङ्कातस्तिर्य्यग्भावेन दाशरथेरयोध्याप्रापणमधिकमाविष्करोति कष्टं सामाजिकानाम्। एतादृशं कविकालिदासस्य मेघ-

दूते यच्चनिर्द्दिष्टवक्रपथपरिग्रहेण कविना स्वयमेव व्याहृतम्—"वक्रपन्थाः" इत्यादि। वस्तुतस्तत् श्राव्यकाव्यत्वेन तादृशदूषणमपि सहनीयं तत्र तत्र काव्यानुशीलयताम्। किन्तु काव्यमिदमभिनेयं नितरामत्र दोषयुष्टस्य लवोऽप्यसह्यः सर्व्वेषामेव वाणीचरणाराधितानाम्। अपि संप्रति विरम्यतामित एव भगवति रामायणानुप्राणितशुभसंवाहिनि वाणि, मामकानाम्।

अस्य प्रतिपाद्यम्,—प्रथमेऽङ्के ताड़कादिनिशाचरबधार्थं रामलक्ष्मणयोः प्रेषणम्। तद्गमनच्छलेन मध्यन्दिनवर्णनम्। वैतालिकानां स्तुतिपाठः। ऐक्ष्वाकूणामैश्वर्य्यवर्णनम्।

द्वितीयेऽङ्के—शुनःशेफपशुमेढ़ाभ्यां प्रभातवर्णनम्। रामलक्ष्मणयोः आश्रमगमनम्, अहल्याशापमोचनम्, रामसुग्रीवबालिरावणप्रभृतीनां परस्परं मैत्रीभावसूचनम्, हनुमतः सुग्रीवेण सह ऋष्यमुखे दुर्गेऽवस्थानम्, भगवत आदित्यात् अधीतव्याकरणो हनुमान् गुरुपुत्रसुग्रीवेण मैत्रीं विधाय गुरुदक्षिणां चकार। रामलक्ष्मणयोः तपोवनावलोकनम्, यज्ञवर्णनम्, सान्ध्यसूर्य्यवर्णनम्, राक्षसावतारः, रामलक्ष्मणयोर्युद्धेन ताड़कादीनां बधः, प्रसङ्गेन धनुर्भङ्गपणश्रवणात् मिथिलायां रामलक्ष्मणयोर्गमनेच्छा।

तृतीयेऽङ्के—कलहंसिकया रामं प्रति वैदेह्या अनुरागप्रकटनम्, रामलक्ष्मणयोर्विदेहगमनम्, रावणस्य परिभवः, वारणपुरोधसश्शौष्कलेन धनुर्भङ्गं विना रावणार्थे सीताप्रार्थनम्, भयप्रदर्शनञ्च, रामेण हरधनुर्भङ्गः।

चतुर्थेऽङ्के—माल्यवत्शूर्पणखयोः गूढ़मन्त्रणम्, भार्गवकोपः

रामात् तस्य परिभवः, शूर्पणखया मन्थरावेशेन चतुर्दशवत्सरान् यावत् रामस्य वनगमनप्रतिज्ञार्पणम्, रामस्य वनगमनम्, दशरथस्य विप्रलम्भः।

पञ्चमेऽङ्के—जाम्बवत्-श्रमणयोः परम्परया रामरावणयोर्वृत्तान्तकथनम्, सीताहरणम्, जटायुदर्शनम्, गुहकसम्मेलनम्, बालिवधः, सुग्रीवाभिषेकः।

षष्ठेऽङ्के—माल्यवता लङ्काया वर्णनम्, तद्दाहकीर्त्तनञ्च, दूतप्रेषणम्, दूतमुखेन सेतुबन्धवार्त्ताश्रवणम्, रामेण सह विभीषणस्य मैत्री, ससैन्यरामस्य लङ्कागमनम्, सैन्यानां युद्धम्, कुम्भकर्णप्रभृतीनां निधनम्, इन्द्रजितो युद्धम्, हेमाङ्गदरत्नचूड़ाभ्यां रामरावणयोर्युद्धवर्णनम्, रावणस्य निधनम्, युद्धभूमौ मन्दोदर्य्या गमनम्।

सप्तमेऽङ्के—विमानेन सीतायाः लङ्कापरिदर्शनम्, सेतुवर्णनम्, समुद्रवर्णनम्, हिमाद्रिवर्णनम्, कैलासवर्णनम्, चन्द्रलोकवर्णनम्, सिंहलगमनं तस्य वर्णनञ्च, उज्जयिणीवर्णनम्, गङ्गासागरसङ्गमवर्णनम्, प्रयागगमनम्, गङ्गायमुनयोः वर्णनम्, काशीकाञ्चीद्राविड़ादिदेशाननुक्रत्य रामस्यायोध्यागमनम्, भ्रातृसम्भाषणम्, राज्याभिषेकः, इत्यन्तं संक्षिप्तविवरणम्।

**नायकादिसिद्धान्तः**—अत्र नायको रामचन्द्रो धीरोदात्तः, प्रतिनायको रावणः, अनुनायकास्तत्पक्षीयाः, नायिका सीता स्वकीया मुग्धा, नायकस्यानुकूलः, शृङ्गारावलम्बनम्, परस्परविरोधवाक्यादीनि उद्दीपनानि, परिक्रमणभ्रुकुट्यादयोऽनुभवाः, उत्साहस्थायी, युद्धवीररसोऽङ्गी, उत्साहरौद्रादयोऽङ्गरसाः,

लक्ष्मणसुग्रीवविभीषणाः पीठमर्द्दकाः, रीतिर्गौड़ी, ओजो नाम गुणः, प्रस्तावना प्रयोगातिशयरूपा दूताः शुकसारणहनुमन्तः प्रभृतयः सन्देशहारका इति ।

---

## वेणीसंहारसमालोचनम्—

वेणीसंहारं हि नाम नाटकं संस्कृतवीररसात्मकनाट्यनिवहेषु परमरमणीयम् । अस्याखानवस्तु हि महाभारताख्यमहामहीरुहस्य मूल-काण्ड-शाखा-पल्लव-फलरूपाणां युधिष्ठिरादिदुर्य्योधनानां परस्परविरोधवर्णनरूपम् । तच्च दुर्य्योधनपरामर्शानुसारेण छलेनाहूय पराजिते युधिष्ठिरेऽक्षदेवने शकुनिना युधिष्ठिरादयः पञ्चपाण्डवाः द्रौपद्या सह सुयोधनस्य दासत्वमङ्गीचक्रुः । दुःशासनेन जेतुः सुयोधनस्याज्ञया संसदुपगतानां सभ्यानां पुरतः समुपहृते पाञ्चाल्याः केशेऽम्बरञ्च । तत्र च परिहासपूर्व्वकमूरुप्रदर्शनेन दुर्य्योधनेन द्रौपदी इतोनिषीदेति परिभाषिता । तदाकर्ण्य भीमेन प्रतिज्ञातम्, यदहम्—'दुःशासनशोनितं पिवामि, गदया कौरवशतं मथनामि, सुयुधनस्य चोरू संचूर्णयामि, स्थानावनद्धघनशोनिताक्तेन पाणिना दुःशासनावकृष्टान् केशान् संयच्छामि' इति । ततस्ते सर्वे पाण्डवाः धृतराष्ट्रस्यानुग्रहेण दासत्वान्मुक्ताः वनमाजग्मुः । वनवासान्निवृत्ता समरमारभ्य केशसंयमनपर्य्यन्तमेतन्नाटकप्रतिपाद्यम् ।

एतस्य रचयिता काश्यपवंशावतंसश्रीमद्भट्टनारायणः

कविः। स तु पुरा गौरप्रदेशाधिपतिना आदिशूरनाम्ना प्रबलपराक्रमशालिना केनचिन्नरपतिना कान्यकुब्जात् स्वीययज्ञसम्पादनार्थमानीतः।

अस्य तावत् कवेः रचनानैपुण्यं नाटकस्य प्रत्यङ्गेषु नानाविधभावोन्मेषतया प्रतिफलितम्। एतस्य च स्थानेषु भीतिः, स्थानेषु उत्साहः, स्थानेषु च प्रतिपक्षनिराकरणप्रवृत्तिः साधारणानामिवातिमात्रं मोहयत्यतितराम्। अभिनयकालेचास्य कुतश्चिदननुभूतमिव स्वर्गसौन्दर्यमुपतिष्ठते। प्रतिपात्रञ्च शान्तरौद्रादिविविधरसावतरणया प्रकृतपात्रमिव विश्वसयति मोहयति च सहृदयानां हृदयम्।

नाटकेऽस्मिन् देशकालपात्रानुसारेण कविना शब्दभाषाभावाः सम्यक् प्रयुक्ताः। वीराणां कथने गौड़ीरीत्यनुसारेण समासबहुला उत्कटाश्च वाचः प्रयुक्ताः। यथा भीमस्य कथने—"चञ्चद्भुजभ्रमितचण्डगदाभिघात" इत्यादि। अश्वत्थाम्नः—

"महाप्रलयमारुतक्षुभितपुष्करावर्त्तक-
प्रचण्डघन-गर्ज्जितप्रतिरवानुकारी मुहुः।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः॥"

इत्यादि सर्वत्र वीरवाक्ये परिलक्ष्यते। नारीनीचराक्षसादीनामुक्तौ प्राकृतराक्षसादिभाषा प्रयुक्ता, राक्षसोक्तौ बीभत्सरसस्यावतरणयाभिनयदर्शनार्थिनामत्यतिशयमानन्द उत्पाद्यते। तथाहि—"हद-मानुश-मंशभालए इभ शहश्शवशा-रुश-शंचिए" इत्यादि।

पात्रानुसारेण तेषां स्वभावाः वर्णिताः भीमस्योक्तो औद्धत्यं यथा—"युष्मच्छासनलङ्घनाम्भसि मया मग्नेन नाम स्थितम्" "चूर्णिताशेषकौरव्यः क्षीवो दुःशासनासृजा" इत्यादि। युधिष्ठिरस्य विवेकपरायणता, धर्मभीरुता औदार्य्यादिकम्, यथा—"तीर्णे भीष्ममहार्णवे" "पङ्केवा सैकतेवा" इत्यादि।

इतरेषामतुलवीर्य्यशालित्वं वश्यता च। पाञ्चाल्याः क्षत्रस्त्री-जनोचिता तेजस्विता तथा च—"णाह, मा क्खु मा क्खु जस्सेणोपरिहदोवि दे" इत्यादि। प्रतिनायकस्य दुर्य्योधनस्य अविवेकिता अहङ्कारः, अभिमानिता च यथा—"हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम्" "दुःशासनस्य हृदयक्षतजाम्बुपाने" इत्यादि। तस्य सहायस्याङ्गराजस्य वीरत्वं प्रभोरनुरूपा प्रकृतिश्च, यथा—

"निर्वीर्य्यं वा सवीर्य्यं वा मया नोत्सृष्टमायुधम्।
यथा पाञ्चालभीतेन पित्रा ते बाहुशालिना॥" इत्यादि

अश्वत्थाम्नोऽसाधारणबलवीर्य्यशालिता पितृभक्तिप्रभृतिगुणसमूहाः प्रदर्शिताः, यथा—'दग्धं विश्वं दहनकिरणैर्नोदिता द्वादशार्काः' 'श्रुत्वा वधं मम मृषा सुतवत्सलेन' इत्यादि। एतादृशवर्णनानैपुण्यं यत्र तत्र सुदुर्लभम्। आलङ्कारिकैरुक्तानि अभिनयार्हाणां नाटकानां लक्षणानि अत्रैव सम्यक् परिस्फुटन्ति। नाट्यशास्त्रानुसारेण सर्व्वाङ्गसुन्दरत्वेऽस्य नास्ति कियानपि सन्देहस्यावसरः। "आः! दुरात्मन्, वृथामङ्गलपाठक, शैलूषापसद" इत्यादि कथोद्घातरूपा प्रस्तावना यथा तथा प्रायो न प्रतिपद्यते। रचना चास्य चित्तविक्षेपसंसाधिन्योजोगुणप्रधाना नाम प्रथम-

तस्तु—"निर्वाणवैरदहनाः प्रशमादरीणाम्"। अन्यतः—कञ्चुकी—"देव, भग्नं भग्नम्। राजा—केन ? कञ्चुकी—देव, भग्नं भीमेन—राजा—आः ! किं प्रलपसि ? कञ्चुकी (सभयम्) देव, कथयामि सर्व्वम्। भग्नं भीमेन भवतः,—राजा—धिक् प्रलापिन्, वृद्धापसद, कोऽयमद्य ते व्यामोहः" ? इत्यादि पताकास्थानकादीनां बहुल-सन्निवेशेन रमणीयतामपूर्व्वामुपाधत्ते नाटकमिदम्। अलङ्कारसम-लङ्कृतत्वं रचनानाम्, रसोपयोगित्वं भाषाणाम्,गभीरत्वञ्च भाव-बन्धानाम् इत्येते गुणा बाहुल्येन परिस्फुरन्ति। नाटकोक्तसन्धीनां यथालक्षणं सुसन्निवेशः। तेषां तेषां प्रकृष्टचरित्राणां नैपुण्येन रसोद्भावकत्वं घटनायाः सुसमञ्जसता च। अपि शृङ्गाररसविमुक्त-तया आबालवृद्धानामपि सर्व्वेषां पठनोपयुक्तत्वमभिनयदर्शन-योग्यत्वञ्चास्य नाटकस्य सर्वैरङ्गीक्रियते। किन्तु विद्यतेऽन्तरान्तरा पदपदांशवाक्यालङ्कारदोषाणामपि संस्थानम्। षष्ठेऽङ्के नायकस्य युधिष्ठिरस्यैतादृशी भीरुता किञ्चिद्भावप्रतिकूलतामावहति। यच्चार्वाकवचने प्रतारितस्य महामहिमयुधिष्ठिरस्य जीवनपरित्याग-समये स्वयं चिताहरणं सामान्यजनवत् प्रदर्शितं तन्नूनमासमुद्र-करग्राहिणो राज्ञो विशेषतः समरसमयेऽपि तस्य परिजनहीनता न जातु परिकल्पितुमर्हामः। इत्यादिकमकिञ्चित्करं कमपि दोषभागमपहाय सर्वाङ्गसुन्दरत्वमस्य नाटकस्य निर्वाधमसन्धि-न्नञ्च प्रज्ञावतां मतमित्यलमधिकवचसा।

**अस्य प्रतिपाद्यम्**—एतस्य नाटकस्य प्रथमेऽङ्के पञ्चग्रामप्रार्थनया सन्धिप्रस्तावः, कृष्णस्य च दौत्यस्वीकारः।

तत्श्रुत्वा भीमस्य तस्योपरि क्रोधः। युधिष्ठिरस्यानुमतिमनवीत्त्य सन्धिविघटनार्थमुद्यमः, तदर्थं समरावतरणाय अस्त्रास्त्रागार-भ्रान्त्या द्रौपदीभवनं प्रवेशः। तत्र गान्धार्याः पादवन्धनात् प्रत्यागतायाः द्रौपद्याः भानुमत्या सगर्वमुपहासमाकर्ण्य भीमस्यातत्यधिकः क्रोधः। ततः पाण्डवपक्षपातात् कुपितेन दुर्योधनेन परिसन्दधानं माधवं संयमितुमाक्रान्तम्। समर-तूर्य्यमाकर्ण्यानन्दितस्य भीमस्य समरावतरणम्।

द्वितीये—नकुलेनाहिशतवधस्तदास्कन्दनञ्चेति दुःखप्रदर्शने-नोद्वेजितायाः भानुमत्या दुर्दैवशान्तये बालोद्याने प्रवेशः। अथ प्रज्वलितेऽपि दारुणे समरानले राज्यप्रत्याहरणकामे भीमे च अन्तःपुरविहारानुभवो दुर्योधनस्य। भानुमत्या सखीसमीपे वर्णितं तस्याः दुःखवृत्तान्तमुपश्रुत्य तस्या व्यभिचारमाशङ्कमानस्य क्रोधा-न्धस्य दुर्योधनस्य तां हन्तुमुद्यमः। अथ स्वप्नवृत्तान्तवर्णनावसरे "ततः प्रतिबुद्धास्मीति" तस्योपसंहारवर्णनमाकर्ण्य चास्यालीका-शङ्कापनीता। दुर्योधनसमागमे तु तस्या नियमभङ्गः। ततो वाति बलवति प्रभञ्जने भानुमत्या सह दुर्योधनस्य गृहाभ्यन्तरप्रवेशः। तदा स्त्रीसमागमसुखमनुभूयमानाय कञ्चुकिना समुपेत्य बल-वता प्रभञ्जनवेगेन भग्नं स्यन्दनमसंशयमशुभोदर्कं निवेदितम्। राज्ञा च सात्त्वयाज्ञप्तं पुरोहिताय तदुपशान्तये। जयद्रथेनाभि-मन्योर्वधः। ततोऽनस्तमिते दिनकरे तमहं हनिष्यामि, नो चेत् स्वयं प्राणान् त्यक्ष्यामीति धनञ्जयस्य प्रतिज्ञा। तदाकर्ण्य जय-द्रथमातुः जयद्रथपत्नीदुःशलायाश्च दुर्योधनस्य शरणपरिग्रह-

णम्। अर्ज्जुनप्रतिज्ञामाकर्ण्य हृष्टचेतसा सुयोधनेन तयोः सान्त्वनम्, जयद्रथरक्षार्थमन्तःपुरान्निर्गमनञ्च।

तृतीये—जयद्रथघटोत्कचादीनां वधः, द्रोणस्य शिरश्छेदश्च। अथ अनधिगतपितृनिधनवृत्तान्तेन पितृविक्रमदर्शनाय समरभुवः समागच्छता द्रौणिना पलायमानान् कर्णकृपादीनवलोक्य निवारणमुत्साहदानञ्च। तदा च सुतशोकात् परित्यक्तायुधस्य पितुः धृष्टद्युम्नेन विनाशमुपश्रुतवताश्वत्थाम्नः शोकः, गुरुवधमुपेक्षमाणानां युधिष्ठिरादीनामुपरि क्रोधः; सकलद्रुपदकुलस्य सानुचरपाण्डवानाञ्च संहारप्रतिज्ञा च। ततः स्वान्त्वयता कृपेण सेनापतिपदेऽभिषेकाय कौरवराजसमीपेऽस्यानयनञ्च। दुर्य्योधनस्य कर्णे पक्षपातात् तदुपदेशस्योपेक्षा, सैनापत्ये कर्णस्याभिषेकश्च। शोकार्दितस्याश्वत्थाम्नः कर्णेनोपहासः। तस्मादुभयोर्वाक्कलहः; ततः शत्रुता च, कर्णे जीवति नाहमायुधं ग्रहीष्यामीति द्रोणायनेः प्रतिज्ञा। इतरवसरे भीमेन दुःशासनस्य शोणितपानार्थमाक्रमणम्। तद्रक्षणार्थं सर्वेषां समराङ्गनावतरणम्। दुःशासनरक्षणासमर्थस्याश्वत्थाम्नः परिवेदनम्।

चतुर्थे—सारथिना मुर्च्छितस्य सुयोधनस्य समरभूमेरपसरणम्। तरङ्गसंस्पर्शशीतेन वायुना तस्य मोहापगमः। सूतमुखात् दुःशासनस्य वधमाकर्ण्य परितापश्च। ततो बहुवीराणां संग्रामावतरणम्। अनन्तरं सुन्दरकेण वृषसेनकर्णयोर्निधननिवेदनम्। दुर्य्योधनस्य प्रबोधनार्थं गान्धारीधृतराष्ट्रयोः समागमः।

पञ्चमे—सुयोधनसमीपे गान्धारीधृतराष्ट्रसञ्जयानामागमनम्,

राजनीतिप्रदर्शनञ्च। ततस्तयैव युक्त्या सन्धेरकिञ्चित्करत्वं प्रतिपादनम्। ततः कर्णबधामर्षितेन दुर्य्योधनेन संग्रामावतरणाय पित्रोरन्तिके प्रार्थना। तदन्वेषणक्रमेण भीमार्ज्जुनयोस्तत्रागमनम्। ताभ्यां स्वकर्म्म नाम च प्रख्याप्य तयोश्चरणवन्दना। ताभ्यां सह सुयोधनस्य वाग्युद्धः। युधिष्ठिरस्यादेशेन बलैः प्रत्यावर्त्तनम्। कर्णबधात् अश्वत्थाम्नः सैन्यापत्यर्थमागमनम्, कर्णविनाशाशंसनात् तस्य प्रत्याख्यानम्, तदुपश्रुत्य वृद्धराज्ञाऽश्वत्थामानमानेतुं सञ्जयस्य प्रेषणम्।

षष्ठे—पलायनपरस्य सुयोधनस्यान्वेषणार्थं सर्वत्र दूतप्रेषणम्। वासुदेवेन भीमार्ज्जुनाभ्यां तदासादनम्, सरसीति पञ्चालकेन युधिष्ठिरस्याग्रे कथनम्। ततः संग्रामवर्णनम्। कौरवराजमित्रेण चार्व्वाकेण रक्षसा मुनिवेशेनागत्य जलप्रार्थनामिषेण भीमबधं वर्णयता तेनाप्यर्ज्जुनस्य च गदायुद्धाख्यानेन युधिष्ठिरस्य प्रतारणम्। तदाकर्ण्य द्रौपदीयुधिष्ठिरयोर्म्मोहः। ततोऽनले जीवनविनाशाय चितायाः प्रस्तुतीकरणम्। पितृभ्यः भ्रातृभ्यश्च तर्पणम्। अथ प्रतिज्ञां पूरयित्वा तच्छोनितोक्षितेन पाणिना भीमस्य द्रौपद्या वेणीसंहारार्थागमनम्, इति।

———

**नायकादिसिद्धान्तः**—अत्र नायको युधिष्ठिरो धीरोदात्तः, विजेतृणामुत्साहः स्थायिभावः। विजेतव्याः सुयोधनादयः आलम्बनम्। भीमसेनार्ज्जुन-नकुल-सहदेवाः समर-

सहायाः। नायिका द्रौपदी स्वकीया मुग्धा प्रधाना। बाहुबलावलेपाभिमानो दुर्योधनः प्रतिनायकः। कर्ण-शल्य-जयद्रथ-भीष्म-द्रोण-कृपाश्वत्थाम-प्रभृतयः प्रतिनायकसहायाः। भानुमती प्रतिनायिका स्वकीया मुग्धा। परस्परतर्जितवाक्यादीनि उद्दीपनानि, साटोपपरिक्रमणभ्रूकुट्यादयोऽनुभावाः, उत्साहः स्थायी युद्धवीररसोऽङ्गी, शृङ्गारकरुणबीभत्सरौद्रादयोऽङ्गरसाः, रीतिर्गौड़ी, ओजो नाम गुणः, प्रस्तावना कथोद्घातरूपा।

---

## स्वप्नवासवदत्तसमालोचनम् :—

स्वप्नवासवदत्तं हि नाम नाटकं श्रीमन्महाकविना भासेन प्रणीतम्। अस्य च कवेर्लेखनी प्रतिपदमेवाकठोरतया भावगाम्भीर्य्येण घटनावैचित्र्येण पदस्थापनव्यवस्थया च समाकर्षति समुन्नयति सन्तोषयति च सहृदयानां हृदयमतिमात्रम्।

हन्त! किमहो!! कविः काव्यरचनापूर्व्वपूतधारा ; मन्ये कृत्स्नामिमामिन्द्रामिकदा संप्राश्य प्ररोहयति स्म बहुश एवाधस्तनानां कवीनां मानसक्षेत्रे कवित्ववीजं भावसौन्दर्य्यञ्च। महाकवीनान्तु तं प्रति निरवच्छिन्नां प्रीतिं समीक्ष्य मन्यन्ते तावदिदानीमनेक एव काव्यरसरसिकाः सामाजिकाः यदेष एव कविः केवलं तदा समस्तनाट्यगुणोपेतं नाटकं प्रणीय सर्व्वं कवियशः समालभतेति। उक्तञ्च महाकविना बाणभट्टेन हर्षचरितस्य प्रस्तावनायाम् :—

"सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः ।
स पताकैर्यशो लेभे भासो देवकुलैरिव ॥" इति

सूक्तिमुक्तावल्यां समुद्धृते राजशेखरकृते श्लोके भासकवेः समुल्लेखोऽस्माभिः समुपलभ्यते यथा :—

"भासनाटकचक्रेऽपि च्छेकैः क्षिप्ते परीक्षितुम् ।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः ॥" इति

शार्ङ्गधरपद्धतौ समुद्धृते तस्यापि कृतेऽन्यस्मिन् श्लोकेऽपि कवेरस्य समुल्लेखोऽवलोक्यते, यथा :—

"भासो रामिलसौमिल्लौ वररुचिः श्रीसाहसाङ्कः कविः
मेण्ठो भारविकालिदासतरलाः स्कन्धः सुबन्धुश्च यः ।
दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः
सिद्धा यस्य सरस्वती भगवती के तस्य सर्वेऽपि ते ॥" इति

एवं जगतामप्रतिद्वन्द्विकविगुणोपचितेनापि कालिदासेनैवात्मकृतायां मालविकाग्निमित्रस्य प्रस्तावनायां भासकविः पूर्ववर्त्तितया नाटकरचनासु ख्याततया च विज्ञापितः । यथा—"प्रथितयशसां भाससौमिल्लककविरत्नानां प्रबन्धानतिक्रम्य वर्त्तमानकवेः कालिदासस्य क्रियायां कथं बहुमानः ।" इति

एभिर्वचनसमूहैः कवेरस्य बहुप्राचीनता स्फुटत एव प्रतिभाति । परं समवतारितश्च बहुश एव कृतिभिर्यत् ख्रीष्टीयसप्तत्रिंशदधिकषट्शते शरदि ( ६३७ ) हर्षचरितस्य रचनासमयः । ततश्च किञ्चिदूर्द्ध्वतने काले कविकालिदासस्य स्थितिकाल इति । राजशेखरस्यापि सप्तचत्वारिंशदधिकत्रयोदशख्रीष्टशके ( १३३७ )

प्रादुर्भावसमयः, सुतरामेषामूर्द्धतने काले कवेरस्य प्रादुर्भावकाल इत्येतैः सन्दर्भैः स्पष्टत एव तिपन्नोऽस्ति। परमेभ्यः कश्चित् पूर्वतनालङ्कारिको भामहो नामासीत्। तेनात्मकृतकाव्यालङ्कारग्रन्थे न्यायविरोधीदाहरणेनोदाहृतम्:—

"विजिगीषुमुपन्यस्य वत्सेशं वृद्धदर्शनम्।
तस्यैव कृतिनः पश्चादभ्यधाच्चरशून्यताम्॥
अन्तर्योधशताकीर्णं सालङ्कायननेतृकम्।
तथाविधं गजच्छद्म नाज्ञासीत् स स्वभूगतम्॥
यदि वोपेक्षितं तस्य सचिवैः स्वार्थसिद्धये।
अहो नु मन्दिमा तेषां भक्तिर्वा नास्ति भर्त्तरि॥
शरा दृढधनुर्म्मुक्ता मन्युमद्भिररातिभिः।
मर्म्माणि परिहृत्यास्य पतिषन्तीति कानुमा॥
हतोऽनेन मम भ्राता मम पुत्रः पिता मम।
मातुलो भागिनेयश्च रुषा संरब्धचेतसः॥
अस्यन्तो विविधान्याजावायुधान्यपराधिनम्।
एकाकिनमरण्यान्यां न हन्युर्बहवः कथम्॥
नमस्तु तेभ्यो विद्वभ्यो येऽभिप्रायं कवेरिमम्।
शास्त्रलोकावपास्यैव नयन्ति नयवेदिनः॥
सचेतसो वनेभस्य चर्म्मणा निर्म्मितस्य च।
विशेषं वेद बालोऽपि कष्टं किन्नु कथं नु तत्॥"

इत्यादि वाक्यानामामूलमर्म्मार्थं प्रतिज्ञायौगन्धरायणे समुपलभ्य यथा—"अणेण मम भादा हदो, अणेण मम पिदा,

अणेण मम सुदो" इत्यादि प्राकृतवाक्यानामविकलसंस्कृत-छन्दोपनिबन्धतयानुमीयते कै: कैरेव विशेषज्ञैर्यदतिप्रख्याततया तन्नाम नोल्लेख्य भामहाचार्य्येण तत्रत्यांशः समुदाहृतः। तत्र नास्ति कोऽपि सन्देहस्यावसरः; उत एवमेवमपि वक्तुं नोपयुज्यते यद्वृहत्कथायाः कथामवलम्ब्य तेनोदाहृतानि वाक्यानि प्रदर्शितानि। यतस्तत्र कथाग्रन्थे प्रदर्शितानां प्राकृत-वाक्यानां संस्कृतं किमु मर्म्मार्थो वा कथं कथमपि समुपलभ्यते, नितरां तद्ग्रन्थत एव भामहेन समाहृतानि तावन्ति वाक्यानीति सम्यक् प्रतिपन्नोऽस्ति।

अपि हि कविकालिदासात् पूर्व्वतनत्वमस्याधस्तनकारणेन समवगन्तुमर्हामः। यतस्तेनाचार्य्यभामहेन कविनामाख्यानावसरे मेधावी-रामशर्म्मा-अश्वकवंश-अच्युतत्तोरप्रभृत्यपरिज्ञात-कविनामानि समुल्लेखितानि, किन्तु निखिलकविगुणवरेण्यस्य तत्रभवतः कविकालिदासस्य किमु तत्श्राव्यकाव्यस्य न वा रूपकाभिनयदर्शकार्थिनां चेतोऽभिद्रावकानामभिज्ञानशकुन्तलादीनां नाटकानां नामानि समुल्लेखितानि, नोदाहृतानि कानि च तेषां पदानि। यदि च तदाभिज्ञानशकुन्तलसदृशं नाटकं विद्यतेऽत्र जगति तर्हि तदपहाय केन समालोच्यते चान्यन्नाटकोदाहरणम्? अपरञ्च परिलक्ष्यते तावदस्माभिर्यद्भामहकृतयुक्तायुक्तविचारनामधेये ग्रन्थे अचेतनानां वायु-बलाहकादीनां दौत्यकार्यप्रेषणविधिस्तेनैवाचार्य्येण प्रतिपादितः, यथा:—

"अयुक्तिमद् यथा दूता जलभृन्मारुतादयः।

तथा भ्रमरहारीतचक्रवाकशुकादयः ॥

अवाचोऽव्यक्तवाचश्च दूरदेशविचारिणः ।

कथं दूत्यं प्रपद्येरन्निति युक्त्या न युज्यते ॥

यदि चोत्कण्ठया तत्तदुन्मत्त इव भाषते ।

तथा भवतु भद्रेदं सुमेधोभिः प्रयुज्यते ॥" इति

एतद्विधिवाक्यमालोक्य प्रथितकवियशसा श्रीमता कालिदासेन मेघं सन्देशहरमुपकल्प्य मेघदूताख्यमपूर्व्वकाव्यमत्र जगति व्यरचि तराम् ।

अन्यच्च कौटिल्यार्थशास्त्रे एवमेवं समवलोक्यते यथा :—"तुल्यवेतनोऽस्मि, भवद्भिः सहभोग्यमिदं राज्यम्, मयाभिहितः परोऽभिहन्तव्यः इति वेदेष्वप्यनुश्रूयते—समाप्तदक्षिणानां यज्ञानामवभृतेषु सा ते गतिर्या शूराणामिति, अपीह श्लोकौ भवतः—

यान्यज्ञसंघैस्तपसा च विप्राः स्वर्गैषिणः पात्रचयैश्च यान्ति ।
क्षणेन तानप्यतियान्ति शूराः प्राणान् सुयुद्धेषु परित्यजन्तः ॥

नवं शरावं सलिलस्य पूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम् ।
तत्तस्य मा भून्नरकञ्च गच्छेद यो भर्त्तृपिण्डस्य कृते न युद्धेत् ॥

इति मन्त्रिपुरोहिताभ्यामुत्साहयेद् योधान् ॥"

एतत्तावदर्थशास्त्रं खृष्टपूर्व्वचतुर्थशरदि निर्म्मितपूर्व्वम् अतोऽत्रांशे 'नवशरावम्' इति पद्यं प्रतिज्ञायौगन्धरायणेऽपि दृश्यते नितरां वक्तुमुपयुज्यते यदेकेनाप्यपरस्य वचनं समुदाहृतम् । केन कस्मादाहृतं तदूर्द्ध तनांशपर्य्यालोचितेन सम्यक् प्रतिपन्नोऽस्ति । यल्लौकिकव्यवहारविषयेषु येन केनापि स्वपक्षं दृढयितुमात्म-

वाक्यसमर्थनार्थमन्यदीयानुकूलवाक्यमुपकल्प्यते, नितरामत्रापि चार्थशास्त्रकारेणात्मवाक्यसमर्थनार्थं 'सा ते गतिर्या शूराणाम्' इति श्रुतिवाक्येनात्मनः उक्ते दृढत्वमुत्पादितम्। तदनन्तरञ्च 'अपीह श्लोकौ भवतः' इति वाक्येन यदाख्यायितं वचः समर्थ्यते, तदन्यदीयवाक्यमिति सर्वथा प्रतिपन्नोऽस्ति। अतएव वक्तुमुपयुज्यते यन्नवशरावमिति श्लोकः स किल परकीयवाक्यम्।

एवं दृश्यते च प्रायश एव प्रज्ञावान् गृहीतपरकीयवाक्यम् स्वीयरचनाकुशलेन कविरप्राकृतगुणेन कवित्वसुषमया च परिवृत्य विस्तारयति भृशं पाठार्थिनां निभृततमहृदयदेशेष्वात्मन ऐकान्ताधिपत्यम्, किन्तु नवशरावमित्यत्र तादृशं लवमप्याभासं नासाद्य नूनमवगन्तव्यं यदर्थशास्त्रकारेण कवेराहृतस्तत्रत्यांश इति। अतो वक्तुं शक्यते चन्द्रगुप्तगुरोः कौटिल्यस्य पूर्व्ववर्त्तित्वं भासकवेः। परमस्य ग्रन्थे बाहुल्येन व्याकरणशासनसमनुलङ्घनतया वैयाकरणपाणिनेरपि पूर्ववर्त्तित्वमुद्भाव्यते भावमिश्रै रिति।

हंहो! विद्यावयोवृद्धाः! अर्भकाः सुकुमाराः कुमाराश्च! बाढं वक्तुमर्हामः कविरयं बहुप्राचीनः कविवरिष्ठश्चेति। अस्य रचना एतादृशी सरला भावप्रवणा हृदयग्राहिणी मनोरमा स्वाभाविकी च, मन्ये कविगुरोर्वाल्मीकेरन्यत्र तादृशी रचना दुर्लभा अदृष्टपूर्व्वा चेति। यथात्र रूपके तपोवनवर्णनानुक्रमेण नैसर्गिकीं शोभां वर्णयति कविः—

"विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्यया
वृक्षाः पुष्पफलैः समृद्धविटपाः सर्वे दयारक्षिताः।

भूयिष्ठं कपिलानि गोकुलघनान्यच्चेत्रवत्यो दिशो
　　निःसन्दिग्धमिदं तपोवनमयं धूमो हि बह्वाश्रयः ॥"

इति कविता केषां न हृदयभूमिं गलन्मन्दाकिनीधारयैव काव्यरसधारया संप्लावति समाश्रयति चाकठोरपदयोजनयारम्बरपरिहीनतया च सचेतनानां चेतांसि प्रसभम् ?

अपि हि समवलोकयति तावद् बाहुल्येन प्रख्यातख्यातिमतां बहुश एव कवीनां ग्रन्थेषु कवेरस्य क्वचिद् भावसाम्यं क्वचित् पदसाम्यं कुचिच्च रीतेरनुकरणञ्च ; किन्तु तुद्रतमेऽस्मिन् सन्दर्भे सर्वेषामेव तेषां कविग्रन्थानामालोचनं सर्वतोऽसम्भवं विशेषतः समयसापेक्षञ्चानुमन्य केवलं कविप्रधानस्य श्रीमत्कालिदासस्य कतिपयो ग्रन्थान् एवं तस्य सर्वसारभूते अभिज्ञानशकुन्तले यत्र यत्र एतन्नाटकीयभावं पद्धोतमस्ति तत् प्रदर्श्य सम्प्रति अन्तर्धातुमिच्छन् प्रियसुहृद्भ्य एष खलु वराक इति ।

आह किल कविः स्वप्नवासवदत्ते यौगन्धरायणमुखेन :—

"पूर्वं त्वयाप्यभिमतं गतमेवमासी-
　　च्छ्लाघ्यं गमिष्यसि पुनर्विजनेन भर्त्तुः ।
कालक्रमेण जगतः परिवर्त्तमाना
　　चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः ।" इति

मेघदूते च कालिदासः—

"नन्वात्मानं बहु विगणयन्नात्मनैवावलम्बे
　　तत् कल्याणि त्वमपि सुतरां मा गमः कातरत्वम् ।
कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा

नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥" इति

अभिषेकनाटके उक्तञ्च भासेन :—

यस्यां न प्रियमण्डनापि महिषी देवस्य मन्दोदरी
स्नेहाल्लुम्पति पल्लवान् न च पुनर्वीजन्ति यस्यां भयात् ।
वीजन्तो मलयानिला अपि करैरस्पृष्टबालद्रुमा
सेयं शक्ररिपोरशोकावनिका भग्नेति विज्ञाप्यताम् ।" इति

अभिज्ञानशकुन्तले कालिदासेन :—

"पातुं न प्रथमं व्यवसति पयो युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला प्रतिगृहं सर्वैरनुज्ञायताम् ॥"

इत्यत्र रेखांकितस्थलेषु भासकवेरुक्तिसाम्यानि समवलोक्यते। अन्यत्र बालचरिते कृष्णमाता कंसावरुद्धकारातौ बालकार्पणावसरे वसुदेवमाह :—

"हृदयेनेह तत्राङ्गैर्द्विधाभूतेव गच्छति ।
यथा नभसि तोये च चन्द्रलेखा द्विधाकृता ॥" इति

उक्तञ्च कालिदासेन श्लोकस्यैतस्यानुरूपं भावादिकमभिज्ञानशकुन्तले :—

"गच्छति पुरः शरीरं धावति पश्चादसंस्थितं चेतः ।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥" इति

"विस्रब्धं हरिणाः" इत्यादि यत् पूर्वमुक्तम्, तस्य किंचिन्मात्रवैपरीत्यमभिज्ञानशकुन्तले पर्य्यवसते यथा :—

नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः

प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः ।

विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगाः

तोयाधारपथाश्च वल्कलशिखानिस्यन्दरेखाङ्किताः ॥" इति

वासवदत्ते—"पविस जादे, पविस" इत्यादि वाक्येन तपस्विन्या पद्मावती समाहूता सा च "भोदु भोदु अय्ये" इत्यादिना प्रतिवचनं दत्तवती। शकुन्तले हि अनसूयानुरुद्धेन राज्ञा दुष्मन्तेन :—"भवतु ; भवतीनाम्" इत्यादि वचसातिथ्यं गृहीतम्। इत्येतेषामंशानामभिन्न एव भावः केवलं वक्तृवैषम्येण यथाकथञ्चित् पृथक्त्वं प्रतिभाति। वासवदत्ते तपोवनग्रामकाञ्चुकीयः स्वीयपरिजनमाकार्य्याह :—

"सम्भषक, न खलु न खलूत्सारणा कार्य्या पश्य :—

परिहरतु भवान् नृपापवादम्

न परुषाश्रमवासिषु प्रयोज्यम्।

नगरपरिभवान् विमोक्तुमेते

वनमभिगम्य मनस्विनो वसन्ति ॥" इति

शकुन्तले हि दुष्मन्तः सेनाधिनायकम् :—

"तेन हि निवर्त्तय पूर्वगतान् वनग्राहिणः। यथा न मे सैनिकास्तपोवनमुपरुन्धन्ति, तथा निषेद्धव्याः। पश्य :—

शमप्रधानेषु तपोवनेषु

गूढं हि दाहात्मकमस्ति तेजः।

स्पर्शानुकूला इव सूर्य्यकान्ता-

स्तदन्यतेजोऽभिभवादमन्ति ॥"

अत्रोद्ध तांशद्वययोः प्रथमांशे तपस्विजनानां शान्तप्रकृतितया-श्रमदेशस्य कथं कथमपि राजानुगम्यमानैः परिजनैर्नोद्विज्यत इत्याशयेनोक्तिः। उत्तरांशे तपस्विनां शक्तिभयेन भीतस्य राज्ञो निषेधः। एवमेवं हि वासवदत्तस्य बहुसादृश्यमभिज्ञानशकुन्तले सर्वत्र परिलक्ष्यते, वासवदत्ते एकत्र :—

"पद्मावती :— अय्ये, किं दानिं मं ओहसिदुं विअ णिज्झा असि ?

वासवदत्ता :— णहि णहि! हला, अधिअं अज्ज सोहदि अभिदो पिअ दे अज्ज वरमुहं पेक्खामि।

पद्मावती :— अवेहि। मा दाणिं मं ओहस॥" इति

शकुन्तले प्रियंवदात्मसहचरीमनसूयामाह :—

"प्रियंवदा –( सस्मितम् ) अणसूए, जाणसि किं सउन्तला वणजोसिणीं अदिमेत्तं पेक्खदित्ति ?

अनसूया—णदु विभावेमि, कहेहि।

प्रियंवदा—जह वणजोसिणी अत्तणो सदिसेण पाअवेण संगदा, अविणाम एव्वं अहं वि अत्तणो अणुरुवं वरं लभे अत्ति।

शकुन्तला—एसो णूणं तुह अत्तगदो मणोरहो।" इति

एकतो नृत्यव्यापारे उपयुक्तभर्तृलाभवार्त्तां सहचरीं पद्मावतीमुक्तवती वासवदत्ता। परत्र जलसेचनपरायणानां

सखीत्रयाणां परस्परविस्रम्भालापैस्तदर्थ एव प्रतिपादितोऽस्ति । वासवदत्ते वासवदत्तापचितविपञ्चीयन्त्रस्य तथालेख्यस्य तस्याः प्राप्तौ राज्ञो वत्सराजस्य यथानुरागाभिव्यक्तिः; निन्दावादश्च तयोः; तथा शकुन्तले अङ्गुरीयकस्य शकुन्तलाप्रतिकृतेश्चाधिगतस्य राज्ञः समानानुरागः खेदश्च परिलक्ष्यते, यथा वासवदत्ते वत्स-राजः—

"श्रुतिसुखनिनदे, कथं नु देव्याः
स्तनयुगले जघनस्थले च सुप्ता ।
विहगगणरजो विकीर्णदण्डा
प्रतिभयमध्युषितास्यरण्यवासम् ॥ इति

राजा—अस्निग्धासि घोषवति, या तपस्विन्या न स्मरसि ?

श्रोणीसमुद्वहनपार्श्वनिपीडितानि
खेदस्तनान्तरसुखान्युपगूहितानि ।
उद्दिश्य मां च विरहे परिदेवितानि
वाद्यान्तरेषु कथितानि च सस्मितानि ॥" इति

शकुन्तले दुष्यन्तः—

"तव सुचरितमङ्गुलीय, नूनं
प्रतनु ममेव विभाव्यते फलेन ।
अरुणनखमनोहरासु तस्या-
श्च्युतमसि लब्धपदं यदङ्गुलीषु ॥
कथं नु तं बन्धुरकोमलाङ्गुलिं
करं विहायासि निमग्नमम्भसि ?

अथवा—

अचेतनं नाम गुणं न लक्षये-

न्मयैव कस्मादवधीरिता प्रिया ॥" इत्यादि

एवमेवं हि नाटकस्यास्य सर्व्वत्र परिलक्ष्यते, कृतं पुनरधिकेन तदुद्घाटनाविष्करणेन। परमेतन्नाटकस्य पात्रादीनां सुसन्निवेशन-तया सातिशयसारल्येन च तेषामुक्तिप्रत्युक्तीनां मध्ये अभिनय-व्यापारे महत्येवोपयोगिता सर्व्वत्र सुरक्षितमासीत्। एतस्य कवितापर्यालोचनेषु प्रत्येकमेव पदबन्धेषु भावसमागमेषु च तथा तथा प्रतिभासते यत् कविर्लेखनीमुपक्रमय्य लेखान्न विरराम। नापि वा चिन्तावसरं स्वीचकार। तस्याकठोरपदपाठेन एवं प्रति-पद्यते यन्नासीदस्य तुल्यः स्वाभाविककाव्यरचनाकुशलः कश्चिदपरः कविरिति किं बाहुल्येन वचसा।

**अस्योपोद्घातकथा**—अस्ति किल प्रतिज्ञानाटिकायाम्। भुवि प्रथितसोमवंशे प्रख्यातख्यातिमतोऽर्ज्जुनसूनोरभिमन्योरधस्तने पञ्चविंशे पुरुषे कश्चित् वीणाकलाविशेषज्ञो हस्तिहृदयवेदी वत्स-राज उदयनो नाम संजातः। तन्तु अवन्तिपतिः प्रद्योतनामा जामातरं कर्त्तुकामो मृदुनैवोपायेनाशकत्। अथैकदा स्वपरराज्य-सीमोपान्ते आखेटव्यापारवशान्नागवनमुपगतं तमेव वत्सराजं समीक्ष्य कल्पितनीलेभदर्शनमिषेण वञ्चयित्वायत्तीकृत्य च स्वान्तः-पुरेऽवरुध्य दुहितुर्व्वासवदत्ताया वीणाशिक्षणकर्म्मणि नियुक्त-वान्। ततो गच्छति काले, तत्रोभययोरेकत्रावस्थानेनातिशयित-रागोपचिते परस्परे, एकदार्थशास्त्रविशारदेन वत्सराजमन्त्रिणा

यौगन्धरायणेन स्वनीत्या शुद्धान्तःपुरान्मुक्तपूर्वः प्रणयिन्या वासवदत्तया निजपुरमगमत् । तत्रापहृतया सकलस्त्रीजनासुलभगुणोपचितया स्वीयमहिष्या सह कौशाम्बीमधिष्ठाय विविधानि सौख्यान्यनुभवत् ।

तस्मिन्नेवावसरे कश्चिदारुणिनामारातिर्वत्सराज्यं स्वायत्तीकृतवान् । तदुद्धारो मगधदेशाधिपतेर्दर्शकस्य बाहुबलापेक्षमाणतया मैत्रीसङ्गतार्थं तस्य भगिनीपद्मावतीपरिणयमन्तरेण वत्सराजस्य कथं कथमपि सम्भवति, तच्चापि जीवन्त्यां राजवल्लभायां वासवदत्तायामसम्भाव्य परं पद्मावतीप्रणयाभिव्यक्तिश्च राजनि घटिष्यति किं नवेति मनीषया वत्सराजमन्त्रिणा यौगन्धरायणेन रुमण्वदादिभिः सचिवैः राजनीतिकुशलिन्या महिष्या वासवदत्तया च सह संमन्त्र्य वासवदत्ताया मिथ्यामरणवादप्रचारेण प्रतारणमेव वत्सराजस्य पद्मावतीपरिग्रहे सामयिकोपाय इति निर्द्धारितम् । तदुपक्रमत्र नष्टराज्योद्धारहेतुभूतपद्मावतीपरिग्रह एवास्य स्वप्नवासवदत्तनाटकस्य प्रतिपाद्यो विषय इति ।

संक्षिप्तेतिवृत्तम्—प्रथमाङ्कः—लावाणकग्रामदाहेन तद्ग्रामोपगताया राज्ञीवासवदत्ताया मरणं, तस्याः रक्षणव्यसनिनो मन्त्रियौगन्धरायणस्य च तया सह वह्नौ मृतुरासीदिति मिथ्या समन्तात् प्रचार्य्य गृहीतपरिव्राजकवेशधारिणो मन्त्रियौगन्धरायणस्य आवन्तिकस्त्रीजननेपथ्यगृहीतवत्या वासवदत्तया सह तस्मात् प्रस्थानम् । ततो यथोपयुक्तस्थाने संरक्षणं वासवदत्ताया गवेषयता मन्त्रिणा मगधोपकण्ठे क्वचनाश्रमपदे गमनम् । तत्र

दिष्ट्या मातृदर्शनाकाङ्क्षितायाः पद्मावत्याः समुपस्थितिः। तस्याश्च तपस्विजनाभिलषितार्थप्रदाने प्रतिज्ञोद्घोषणम्। तमवसरमासाद्य सिद्धादेशिकादिष्टभाविवत्सराजमहिषीत्वावगमात् सैव प्रकृष्टतरं विन्यासास्पदं वासवदत्ताया इति विमृश्यतो मन्त्रिणः प्रोषितभर्तृकात्मस्वसृव्यपदेशेन पद्मावत्यै समर्पणम्। तस्य च कार्यशेषसंविधानाय तस्मात् प्रस्थानम्। प्रियाविच्छेदोपरतविदूनवत्सराजोदन्ताधिगतिः। वत्सराजार्थं पद्मावत्याः कामनाभिव्यक्तिश्च।

द्वितीयाङ्के :—वर्द्धिताभिलाषिण्याः पद्मावत्याः स्वीयभ्रात्रा दर्शकेन वत्सराजाय वागर्पणम्।

तृतीयाङ्के :—पद्मावतीनिमित्ताय वासवदत्तया कौतुकमालिकायाः रचनम्।

चतुर्थाङ्के :—परिणीयमानेऽपि पद्मावतीसम्प्रयोगे राज्ञो वासवदत्तायाः स्मृतेरुन्मेषणम्; तेन च समुपरतायाः प्रियायाः वियोगजदुःखानुभवश्च।

पञ्चमाङ्के :—शयालोर्वत्सराजस्य वासवदत्तायां स्वप्नाधिक्षेपः, पार्श्वोपगताया वासवदत्तायास्तदधिगतिः, जागरितेन राज्ञा सपदि दृष्टिमात्राया वासवदत्तायाः सहसान्तर्धानम्। तेन हि राज्ञः परिदेवनञ्च। ततो दर्शकोत्साहेनोत्साहितस्य राज्ञोऽरातिविजयाय प्रवृत्तिः प्रतिज्ञा च।

षष्ठाङ्के :—वत्सराजस्य राज्याधिगतिः। वासवदत्तोपचितविपञ्चीप्रतिलम्भेन तस्य शोकोद्रेकः, शोकोपनोदनाय च वासवदत्तमात्रा प्रेरितायाः वासवदत्तोद्वाहकालीनप्रतिकृतेस्तस्याधि-

गमनम्। केनचन ब्राह्मणेन तदालेख्यरूपा काऽप्यवन्तिदेशपरिच्छेदधारिणी पद्मावती-सविधे रक्षितेति पद्मावत्या राज्ञे निवेदनम्। तत्कालोपस्थितेन मन्त्रिणा यौगन्धरायणेन रक्षितपूर्व्वाया: प्रत्यर्पणार्थमागमनम्, आलेख्यावन्तिकयो: रूपसंवादपरीक्षणारम्भे तयोरुभययोरात्मप्रकाशनम्। तदनन्तरं मन्त्रिनिवेदितसर्व्ववृत्तान्ताधिगतहर्षितस्य राज्ञ: वासवदत्तापद्मावत्यादिभि: सह स्वीयश्वशुरमभ्यर्थयितुमुज्जयिनीं प्रति गमनञ्चेति वाक्यसंक्षेप:।

**नायकादिसिद्धान्त:**—अस्य नायक: वत्सराज: उदयन: धीरललित:, नायिका वासवदत्ता स्वकीया मुग्धा, पद्मावती च, रसो वासवदत्तागत उदयनविषय: प्रवासविप्रलम्भ:, स उदयनगत: वासवदत्ताविषय: करुण:। पद्मावत्युदयनयो: परस्परविषय: शृङ्गारस्तत्राङ्गम्। नायिकागुणस्मरणेन भौग्यदर्शनादुद्दीपितस्य प्राणपरित्यागोद्यमचिन्तितलुण्ठनादिभिर्व्यभिचारिभिश्च प्रस्फुट:, रतिस्थायी, विदूषकादय: सहाया:, रीति: पाञ्चाली, गुणो-माधुर्य्याख्य:, स्थापना अवलगितरूपा।

—ooo(*)ooo—

## रत्नावलीसमालोचनम्—

इयं खलु रत्नावली नाम नाटिका श्रीमन्महाकविना श्रीहर्षदेवेन विनिर्मिता। एषा हि सुलक्षणतया रसभावोज्ज्वलतया, गुणालङ्कारविभूषिततया, सुकुमारपदसंस्थापनतया च

क्षशकलेवरापि नाटिकान्तरमतिशयाना निखिलरसिकपुरुषाणां कण्ठग्राहिणी चित्तहारिणी च भृशमास्ते ।

अस्याः समालोचनावसरे उइल्सन् महोदयेन स्वाभिप्रायं प्रकटितम्, यत् राजा श्रीहर्षो नाम कविः काश्मीरदेशे संभूय राज्यं शशास । परं स परमविद्योत्साही बहुग्रन्थानां प्रणेता च ।

एवमस्ति चेदेतद्ग्रन्थविषये वर्त्तते सुमहती किंवदन्ती यदिमां नाटिकां प्रणीय धावकः कविः श्रीहर्षदेवाय विक्रीतवान् । तेन च स्वनाम्ना प्रख्यापितमिति काव्यप्रकाशे मम्मठभट्टेन 'काव्यं यशसेऽर्थकृते' इत्युपक्रमे 'अर्थकृते' इत्यस्योदाहरणे वृत्तमिदं समुदाहृतम् ।

भवतु, तद्वितथमवितथं वा यत् श्रीहर्षदेवस्य समयः समवलोक्यते राजतरङ्गिणीग्रन्थे तावदस्माभिस्तत्रै तेषां भूपानां शासनपर्य्यायक्रमेण समुपलभ्यते । तत्र प्रथमः संग्रामः पञ्चविंशतिवर्षपर्य्यन्तम् ; द्वितीयो हरिः द्वाविंशतिदिनम्, तृतीयोऽनन्तः त्रिपञ्चाशत् वर्षम्, चतुर्थः खालासोऽष्टवत्सरं यावत् काश्मीरराजासनमधिरुह्यात्मजं प्रति रुष्टतया स्वगोत्रजोत्कर्षाय सिंहासनं समर्पयत् । तदनन्तरञ्च श्रीहर्षदेवस्तं सिंहासनाभिरुढ़ञ्चन्तमुत्कर्षं पराजित्य ख्रीष्टीयत्रयोदशाधिकैकादशशके [ १११३ ] तदधिचकार । तत् समयादारभ्य पञ्चविंशतिशकमध्ये एतस्याः लिखनं सुसम्पन्नं यातमिति ।

दृश्यते हि दशरूपके ध्वन्यालोके च बाहुल्येनैतस्याः श्लोकानां सुसन्निवेशः । नितरामनुमातुं शक्यते यत्तयोः पूर्ववर्त्तित्वमस्याः

खलु नाटिकायाः। परं दशरूपकस्तावत् खीष्टदशमशताब्दयाः शेषभागे, ध्वन्यालोकस्य खीष्टनवमशकस्य पूर्वे प्रारम्भे वा विरचितौ, अतः श्रीहर्षदेवेन द्वादशशताब्द्यां रचित एष ग्रन्थ इति मतं सर्वथानुपपन्नम् ।

द्वितीयं तावन्मतं यदेषा नाटिका कविना बाणभट्टेन विरचिता। तेनार्थविनिमयेन कान्यकुब्जाधिपतये हर्षवर्द्धनाय प्रदत्ता। हर्षवर्द्धनस्य समयः जनविंशताधिकषट्शतवर्षे [६२८] किमु पञ्चचत्वारिंशाधिकषट्शतहायने [६४५] नितरां मतमेतत् कथं कथमपि विचारसहं प्रमाणास्पदञ्च। तत्र प्रथमं किल विवेच्यम्, यद् बाणभट्टलिखनरीत्यनुप्राणितास्या लिखनप्रणाल्यस्ति किं न वा ? भावस्य च कुत्रापि समानता चेति ।

दृश्यते तावदस्माभिः कादम्बर्यां उत रत्नावल्याश्च लिखनभङ्गिमान्तरातिबाहुल्येनोच्चाङ्गानामलङ्काराणां सुसन्निवेशः, सुललितपदकलापानां संस्थापना च। किन्तु तथापि उभययोरतिशयमन्तरमेव सर्वतः प्रतिभाति। यद्रत्नावलीकविताकुसुममन्तरा सारस्वतनिकुञ्जपुञ्जेषु तादृशं नास्ते वसन्तसुषमावकीर्णमपरप्रसूनं परिमलपरिपूरितमवत्ये तु जगति। महाकविकालिदासस्य कवितातोऽस्य कवितानेकत्र सरला सुन्दरी स्वाभाविकी च। सुकवेः सुबन्धोर्बाणस्य च कविता रत्नावल्याः कवितया सह नैकतस्तुल्यभावं समानञ्च पदलालित्यं किमु काव्यरसधाराञ्च समुद्वहति ।

परं बाणरचितपार्वतीपरिणयनाटकेन सह तुलिताया रत्ना-

वल्या: श्लोकावली भावसौन्दर्य्येण स्वाभाविकत्वप्रकटनेन च सर्व्वोपरि वरिवर्त्ति। एवमपि पदवाक्यमाधुर्य्यादिनाट्यगुणपर्य्यालोचनावसरे च किं पुन: पार्व्वतीपरिणयनाम नाटकम्, मन्यामहे समग्रनाट्यनिवहेषु महाकविनिबन्धेषु च द्वित्राण्यपि सन्ति नाटकानि रत्नावलीसदृशानि किं न वेति मामकानां हृदयम्। अपि हि समग्रगालोचिते रत्नावलीपटकदम्बके स्वतएव चेतसि एवमेवं पर्य्यस्फुरत् यदेषा बाणपिच्छापरेण केनापि कवित्वगुणोत्कर्षेण कविना विनिर्म्मितेति।

हं हो! दृश्यते तावत् कोऽपि श्रीहर्षनामापर: कवि:। येन नैषधचरितं नाम महाकाव्यं प्रणीयात्र जगति सुमहदेव कवियश: समालम्भीति। तेन रचितेयं नाटिकेति न शङ्कापि कथं कथमपि समुद्भावनीया। यतोऽस्य काव्यप्रकाशे श्लोकसमुच्चत्र निश्चिनन्त एव विद्वांसो यत्काव्यप्रकाशरचनानन्तरमेवास्याविर्भाव: काल:। स च खीष्टीयद्वादशशरदन्तवर्त्ती समय:; काव्यप्रकाशस्य तु खीष्टीयैकादशशके विनिर्मितत्वात्। अतएवैतदुभयोरूर्द्धतने कालेऽस्या: रचिततया तादृशी भावना सर्व्वथा हेतुरहिता विचारानुपेक्षिता च सामाजिकानाम्।

परं नागानन्दनाटकं तथा रत्नावली-प्रियदर्शिकानाटिके च कवेरेकस्यैव भावधारापरिहितानि काव्यत्रयाणि जाह्नवीयमुनयो: पूतसलिलप्रवाहानीव द्वितयभावसन्निबद्धानि; नागानन्दे वीरस्य; रत्नावल्यां ब्राह्मणस्य; प्रियदर्शिकायां रत्नावलीभावानुकरणमात्रमेव सम्यगापतति पर्य्यालोचयितॄणां विस्फारितनेत्रप्रान्तवर्त्तिनि प्रदेशे।

अपि हि केषां केषामनुमानं यत् नाटकीयकथावस्तु सोमदेव-विरचितकथासरित्सागराख्यानवस्तुपरम्। तदत्यन्तेऽङ्गेयेयं धीर-धियां धारणा, यतः ख्रीष्टीयत्रयोदशाधिकैकादशशतशके [ ११०३ ] एव कथासरित्सागरस्य निर्म्माणकालः समवधारितः प्रमाणकुशलैः पुराकालतत्त्वज्ञरसिकैः, नितरां ख्रीष्टनवमशकादूर्द्धतनकालनिर्मिताया रत्नावल्या आख्यानवस्तु तस्माद् ग्रहणं सर्व्वथैवासम्भवमुपपन्नम्।

अन्यच्च या कविगुणाढ्यविरचिता पिशाचभाषामयी वृहत्कथा; सा च सोमदेवेन छन्दसा बाहुल्येन परिवर्त्तनतानीता। तया च कुत्र कस्यामपि कथायामाधिक्यं विकृतत्वं वा नोपगतमिति के खलु सामाजिकाः पर्य्यालोचकाश्च निःशंसयहृदयं वक्तुं शक्नुवन्ति। वृहत्कथायाः लिखनसमयस्तु ख्रीष्टीयप्रथमशकमिते किमु द्वितीयशकमिते एव सम्पन्न आसीदिति प्रमाणितं प्रमाणकुशलिनात्मनिदर्शनया दिशा सभ्यजनगणगोष्ठीषु सुन्दरातिसुन्दरम्। परमस्यां ततो भूपतेर्द्वितीयवारपाणिग्रहणविषयविधौ सुमहदेव परिवर्त्तनं नवविधानं वा संविधायि अत्रभवता कविभास्वरेण। तत्परिवर्त्तनधारा लिखनभङ्गिमा चैतादृशी सुन्दरी स्वर्गीयानन्ददायिनी विचित्रतामयी स्वाभाविकी च यत् पाठमात्रेणैव समाददाति ह्लादयति विस्मयति च सहृदयानां चेतोऽतिमात्रम्।

मन्यन्ते तावदनेके भासविनिर्मितस्वप्नवासवदत्तादेव संगृह्यते कविना रत्नावल्याः कथाख्यानम्। भासकवेराविर्भावसमयस्तु

खीष्टपूर्व्व चतुःशके [ ४०० ]; सुतरामेतद्वितथत्वख्यापने नास्ति किञ्चिद् विशिष्टप्रमाणं दार्ढ्य मपि प्रत्यभिज्ञानञ्च। दृश्यते हि मालविकाग्निमित्रस्य प्रस्तावनायाम् "भास-सौमिल्लककविरत्ना-नाम्" किं वा "भास-धावककविरत्नानाम्" वा "कवि-पुत्राणाम्" इत्यादि कथाप्रसङ्गेन भासधावकयोरधस्तनकालवर्त्तित्वमात्मनः प्रख्यापितं कविना कालिदासेन। सुतरां पूर्व्वतनेभ्योऽधस्तना-नामाख्यानवस्तुसंग्रहे का नाम कथा ? प्रयाश एव दृश्यते काव्य-जगति यत् क्षुद्रतो महन्तं यावदनेकैरेव कीर्त्तिमद्भिः पूर्ववर्त्तिनो भावसम्पत् किमु पदग्रामः श्लोकांशाश्च बाहुल्येन समाक्रीयन्ते। शूद्रकस्तु भासकवेश्चारुदत्तं मृच्छकटिकनाम्नानेकांशानिवात्मीयान् चकार। इत्यादि भूरिप्रमाणानां न विरलभावो दृश्यश्राव्यकाव्य-योरन्तर्व्वर्त्तिनि नैरन्तर्य्यानन्दमये प्रदेशे। किन्तु तदालोचनस्य नायमवसरोऽप्रासङ्गिकत्वादन्यत्रालोचितत्वाच्च। बहुषु प्राचीनाल-ङ्कारग्रन्थेषु रत्नावल्याः श्लोकोदाहरणं समीक्ष्य वक्तुमुपयुज्यते यत् रत्नावलीनाटिकातिप्राचीनतमा प्रामाणिका च। एतस्याः बहुश एव कविताः प्रसभमेव समाकर्षन्ति चेतनानां चेत इति। यथा प्रथमाङ्के :—

"स्रस्तः स्रग्दामशोभां त्यजति विरचितामाकुलः केशपाशः
क्षीबाया नूपुरौ च द्विगुणतरमिमौ क्रन्दतः पादलग्नौ।
व्यस्तः कम्पानुबन्धादनवरतमुरो हन्ति हारोऽयमस्याः
क्रीड़न्त्याः पीड़येव स्तनभरविनमन्मध्यभङ्गानपेक्षम्॥"

"मूले गण्डूषसेकासव इव बकुलैर्व्वास्यते पुष्पवृष्ट्या
मध्वा ताम्रे तरुण्या मुखशशिनि चिराच्चम्पकान्यद्य भान्ति ।
आकर्ण्याशोकपादाहतिषु च वसितं निर्भरं नूपुराणं
झङ्कारस्यानुगीतैरनुकरणमिवारभ्यते भृङ्गमार्यै: ॥"

इत्यादि । द्वितीये च :—

"उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरतैरातन्वतीमात्मन: ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवम्
पश्यन्कोपविपाटलद्युतिमुखं देव्या: करिष्याम्यहम् ॥"

"कृच्छ्रादूरुयुगं व्यतीत्य सुचिरं भ्रान्त्वा नितम्बस्थले
मध्येऽस्यास्त्रिवलीतरङ्गविषमे निष्यन्दतामागता ।
मद्दृष्टिस्तृषितेव संप्रति शनैरारुह्य तुङ्गौ स्तनौ
साकाङ्क्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने ॥"

"परिच्युतस्तत् कुचकुम्भमध्यात्
किं शोषमायासि मृणालहार ।
न सूक्ष्मतन्तोरपि तावकस्य
तत्रावकाशो भवत: किमु स्यात् ॥"

इत्यादि च । तृतीये :—

"बाणा: पञ्च मनोभवस्य नियतास्तेषामसंख्योजन:
प्रायोऽस्मद्विध एव लक्ष्य इति यल्लोके प्रसिद्धिं गतम् ।
दृष्टं तत्त्वयि विप्रतीपमधुना यस्मादसंख्यैरयं
बिद्ध: कामिजन: शरैरशरणो नीतस्त्वया पञ्चताम् ॥"

इत्यादि कविताः पर्य्यालोचयन्तः केचन सामाजिकाः काव्यरस-मभिलिप्सवश्च कविमिमं न वरयन्ते भृशं नमितमौलिनात्र जगतीति कृतं बाहुल्येन ।

**अस्य प्रतिपाद्यम्**—प्रथमाङ्के :—वत्सराजमन्त्रिणा यौगन्धरायणेन नृपभवने रत्नावल्यागमनवृत्तान्तस्य वर्णनम्, ततो वाभ्रव्यनामा कञ्चुकी सिंहलेश्वरामात्येन वसुभूतिना समं कथञ्चित्सागरोत्तरनात् परं कोशलोच्छित्तये गतवता रुमण्वता सह मिलित इति कथनम्, अथ नेपथ्यादुत्थितं पौरजनसङ्गीतसहितं मधुरमृदङ्गध्वनिमाकर्ण्य मदनमहोत्सवदर्शनार्थिनः प्रसादमारूढस्य नृपस्य वर्णनं, पश्चात्तस्य स्वभवने प्रस्थानञ्च । वसन्तोत्सवोचितवेशधारिणो राज्ञो विदूषकेण सार्द्धं संलापः ततो मदनिकाचूतलतिकयो र्गीताभिनयः, राज्ञा च अनयोः क्रीड़ारसस्य वर्णनम् । अथ नृपानुमत्या विदूषकस्य चेटीभ्यां समं नर्त्तनम् । नृत्यनिवृत्ताभ्यां परिचारिकाभ्यां नृपसन्निधौ देव्याः मकरन्दोद्याने रक्ताशोकतले "मदनमर्च्चयिष्यामीति देवेन तत्रोपस्थातव्य" मित्युदन्तस्य निवेदनम् । ततो विदूषकेण समं नृपस्य मकरन्दोद्याने प्रवेशः, उद्यानस्य वर्णनञ्च । अथ पूजोपकरणहस्ताभिः परिचारिकाभिः सह वासवदत्ताया उद्यानप्रवेशः, ताभिः समं संलापश्च । सागरिकायास्तु सिन्धुवारविटपान्तराले अलक्षिताया: मदनपूजां दिदृक्षमाणायास्तत्रैवावस्थानम् । ततो वासवदत्तायाः अशोकमूले भगवतो मदनस्य प्रतिष्ठापनम् । विदूषकेण सह राज्ञस्तत्रोपस्थितिः, आसनोपवेशनम्, महिष्याः रूपवर्णनञ्च । ततो

वासवदत्तया नृपस्यार्च्चनम्। अन्तरालस्थितया सागरिकया च मदनसुन्दरस्य नृपस्य प्रत्यक्षमदनधिया पूजनम्, भवनप्रस्थानोद्यतश्च। ततो विदूषकेणापि स्वस्तिवाचनस्य परिग्रहः। अत्रान्तरे नेपथ्ये वैतालिकस्य सायंसमय-सूचक-स्तुतिपाठः। तन्निशम्य सागरिकायाश्च राजनि मदनभ्रान्ते निरासः, सस्पृहलोचनमवलोकनम्, तत्स्थानात् प्रस्थानञ्च। ततो नृपेण उदयगिरितटारूढस्य चन्द्रमसो वर्णनं, सर्व्वेषां प्रस्थानञ्च।

द्वितीयाङ्कः—पञ्जरहस्तायाः सुसङ्गताया निपुणिकया सह संलापः, तयोः प्रस्थानञ्च। मदनबाधां प्रकाशयन्त्याः सागरिकायाः प्रवेशः, मनोभवस्य च भर्त्सनं, नृपतिप्रतिकृतेर्लेखनञ्च। तत्र आगतया सुसङ्गतया सह संलापः। सुसङ्गतयापि चित्रफलके सागरिकामूर्त्तेर्लेखनम्। तेन च सागरिकायाः कोपप्रकाशः। ततः मदनतापोपसमनाय नलिनीदलैः सागरिकायाः शरीराच्छादनम्। तस्या मूर्च्छा। अत्रान्तरे नेपथ्ये मन्दुराभ्रष्टवानरसम्भ्रमजनितः कोलाहलः। सागरिकायाः मूर्च्छापगमः। तयो स्तमालविटपान्तराले पलायनम्। वानरेण मुक्तबन्धनायाः सारिकाया उत्पतनम्, सखीद्वयस्य तदन्वेषणार्थं गमनञ्च। दोहददातश्रीखण्डदासं प्रशंसता विदूषकेण नवमालिकाया वर्णनम्। अथ राज्ञः प्रवेशः। तेन च मणिमन्त्रमहौषधीनां प्रभावस्य कथनम्। अथ विदूषकेण सह नवमालिकादर्शनार्थं नृपस्य गमनम्। बकुलतरौ सारिकाकण्ठध्वनिमाकर्ण्य भूतशङ्कया विदूषकस्य भयाभिनयः। नृपतिना तु विदूषकस्य भूतभयं निरस्य सारिकाया दश-

नर्म, तन्मुखनिर्गलितानां सागरिका-सुसङ्गतामिथःसंलापानां श्रवणञ्च। अथ विदूषकस्य उच्चैर्हासत्रासितायाः सारिकाया अन्वेषणार्थं राज्ञः कदलीगृहे प्रवेशः। तत्र चित्रफलकप्राप्तिश्च। सुसङ्गतया सह विटपान्तरालस्थितया सागरिकया नृपविदूषकोक्त वाक्यस्य श्रवणम्। चित्रफलकानयनाय सुसङ्गतायाः कदलीगृहे प्रवेशः। तां दृष्ट्वा राज्ञा वस्त्रप्रान्तेन चित्रफलकस्याच्छादनम्, तया सह नृपस्य संलापश्च। विदूषकेण नृपानुमत्या चित्रफलकस्य गोपनं स्वकक्षे संरक्षणञ्च। ततो नृपस्य वासवदत्तया सह नवमालिकामुद्दिश्य मिथो भाषणम्।

सानन्दं नृत्यतो विदूषकस्य कक्षात् चित्रफलकस्य पतनञ्च। देवीसख्या काञ्चनमालया चित्रफलकस्य उत्क्षेपणम्, वासवदत्तायै प्रदर्शनञ्च। सञ्जातकोपायाः वासवदत्तायाः शिरःपीड़ाच्छलेन काञ्चनमालया सह निष्क्रमणम्। राज्ञोऽपि तत्प्रसादनाय अन्तःपुरे गमनम्।

तृतीयाङ्के :—मदनिकायाः काञ्चनमालया समं संलापः। मदनावस्थापन्नस्य महाराजस्य प्रवेशः। तस्य च मदनं प्रति तिरस्कारः। ततो विदूषकस्य प्रवेशः। तेन सह राज्ञा सागरिकाविषयकस्य संलापः, सन्ध्यासमयस्य वर्णनञ्च। ततो नृपस्य सागरिकासङ्केतसमयप्रतीक्षार्थं विदूषकेण समं माधवीलतामण्डपे गमनम्, तमसो वर्णनञ्च। ततो विदूषकस्य सागरिकान्वेषनाय प्रस्थानम्। अत्रान्तरे वासवदत्तायाः काञ्चनमालया सह तत्रागमनम्। पथि विदूषकं दृष्ट्वा काञ्चनमालया सङ्केतरूपायाश्छोटिकाया दानम्

ततो विदूषकस्य देवीं वासवदत्तां वासवदत्तावेशधारिणीं सागरिकां मन्यमानस्य "सागरिका आगता" इति नृपाय कथनम्। नृपेणापि तां सागरिकां मन्यमानेन तस्या रूपस्य वर्णनम्। आश्लेषस्य प्रार्थनञ्च। वासवदत्ताया वाष्पाकुलितनेत्रायाः काञ्चनमालया सह अपवार्य्य संलापः। विदूषकस्य वचनमाकर्ण्य देव्याः सकोपस्मितम्। विदूषकप्रदर्शितस्य चन्द्रोदयस्य राज्ञा वर्णनम्।

ततो मुक्तावगुण्ठनया रोषकषायितचित्तया देव्या सागरिकासक्तचित्तस्य नृपस्य भर्त्सनम्। वासवदत्तां दृष्ट्वा सलज्जस्य भीतस्य भूपतेः तस्याः पादयोः पतनम्, देव्याश्च काञ्चनमालया समं तत् स्थानात् प्रस्थानम्। ततो राज्ञो विदूषकेण सह महिषीविषयकः संलापः, अथ वासवदत्तावेशधारिण्याः सागरिकायाः प्रवेशः। विदितसर्व्ववृत्तान्तायाः देव्याः वासवदत्तायाः सन्त्यमानायास्तस्याः अशोकपादमूले पाशेन उद्बन्धनमानस्य उद्यमः। विदूषकवचनात् सहसा तत्रोपस्थितेन राज्ञा तस्याः मोचनम्। तत स्तद्बाहुपाशस्य निजकण्ठे ग्रहणम्, सुखस्यानुभवश्च। अत्रान्तरे वासवदत्तायाः काञ्चनमालया सह प्रवेशः, प्रच्छन्नभावेन च स्थितया तया सागरिकासहितस्य राज्ञो वचनविन्यासस्य श्रवणम्, सहसा तत् समीपे गमनञ्च। तां दृष्ट्वा भीतस्य राज्ञः पादयोः पतनम्। अथ देव्यनुमत्या काञ्चनमालया लतापाशेन विदूषकस्यबन्धनम्। सागरिकाञ्च अग्रे कृत्य प्रस्थानम्, देव्याश्च पश्चाद्गमनम्। देवीप्रसादनाय नृपतेश्च अभ्यन्तरे प्रवेशः।

चतुर्थाङ्कः—रत्नमालाभाषमाणायाः साश्रुनेत्रायाः विदूषकेण

सह संलापः, विदूषकेण सुसङ्गतानुरोधात् रत्नमालायाः ग्रह-णम्। सागरिकायाः उज्जयिनीप्रेषणवार्त्तामुपलभ्य नृपतेर्विलापः, विदूषकेण सुसङ्गतादत्ताया रत्नमालायाः प्रदर्शनम्। राज्ञा च तस्याः स्वहृदये धारणम्। पुनर्व्विदूषकहस्ते अर्पणम्, अत्रान्तरे रुमण्वतो भागिनेयस्य विजयवर्म्मणः प्रवेशः। तन्मुखात् कोशल-विजयवृत्तान्तमाकर्ण्य राज्ञः परिवेदनम्। रुमण्वतः प्रशंसनञ्च, विजयवर्म्मणश्च निष्क्रमणम्। अथ काञ्चनमालया सह पिञ्छिकां भ्रामयतो बहुधा हास्यं कुर्व्वतश्च ऐन्द्रजालिकस्य कस्यचित् प्रवेशः, ततो नृपानुमत्या वासवदत्तानयनाय काञ्चनमालायाः निष्क्रमणम्। तया सह पुनः प्रवेशश्च। अथ नृपादेशादाकाशमार्गे ऐन्द्रजालिकाविष्कृतहरि-हर-ब्रह्मप्रभृतीनां देवानामाविर्भावः। सिद्धचारणसुराङ्गनानां नर्त्तनञ्च। सर्व्वेषां विस्मयावलोकनम्। अथ वाभ्रव्येण कञ्चुकिना सह सिंहलेश्वरमन्त्रिणो वसुभूतिः प्रवेशः। राज्ञा च ऐन्द्रजालिकं निवर्त्त्य वसुभूतिस्तत् स्वामिनश्च कुशलवार्त्तायाः प्रश्नः। ऐन्द्रजालिकस्य निष्क्रमणम्। अथ वसु-भूतिना समस्तवृत्तान्तस्य वर्णनम्। वसुभूतेर्विलापः। अत्रान्तरे सहसा अन्तःपुरमध्ये प्रदीप्तवह्नेरुद्घोषणम्। वासवदत्तमुखान्नि-र्गलितं "निगड़संयमिता सागरिका दह्यते" इति वचो निशम्य समाकुलचित्तस्य नृपतेर्वह्नौ प्रवेशः, तत्र निगड़बद्धां सागरिकां दृष्ट्वा तस्याः समाश्वसनम्। अथ झटिति वह्नेरदर्शनम्। तत्र ऐन्द्र-जालिकव्यापार इति स्थिरीकरणञ्च। अथ सागरिकां दृष्ट्वा वसुभूति-र्वाभ्रव्यस्य च मिथः संलापः। वासवदत्तया च यौगन्धरायणेन

सागरात् प्राप्ता इति ज्ञापिते वसुभूतेर्विलापः, रत्नावल्याः प्रत्यभिज्ञानञ्च, रत्नावल्याश्च तातसचिवदर्शनात् शोकः मूर्च्छा च। वासवदत्तया च तस्याः मोहोपनयनम्, आलिङ्गनञ्च। ततो वासवदत्तावचनात् रत्नावल्याः निगड़स्य मोचनम्। अथ यौगन्धरायणस्य प्रवेशः, राज्ञा रत्नावल्याः लाभः, वासवदत्ताहस्ते तस्याः समर्पणम्। येन च हेतुना ऐन्द्रजालिकस्य प्रेषणं तस्य सर्व्ववृत्तान्तस्य कथनम्। अथ परितुष्टाया वासवदत्ताया नृपतिहस्ते रत्नावल्याः प्रदानम्, सर्व्वेषां परितोषः, निष्क्रमणञ्च।

**नायकादिसिद्धान्तः**—अत्र नायको वत्सराजो धीरललितः, नायिका सागरिका मुग्धा, कृताभिषेका महिषी वासवदत्ता प्रतिनायिका स्वकीया मध्या चेत्यालम्बनविभावाः। वसन्तकुसुमालेख्यादय उद्दीपनविभावाः; परस्परसंवादाक्षिविक्षेपादयश्चानुभावाः; आवेगौत्सुक्यादयो व्यभिचारिणः, रतिः स्थायी, सम्भोगशृङ्गाररसोऽङ्गी; हास्यविप्रलम्भादयोऽङ्गरसाः, विदूषकादयः सहायाः; रीतिः पाञ्चाली, गुणो माधुर्य्याख्यः; प्रस्तावना कथोद्‌घातरूपेति।

## नागानन्द-समालोचनम्—

नागानन्दं हि नाम नाटकं कविना श्रीहर्षदेवेन विरचितम्। अस्य खलु कवेर्विषयिणी बहुकथा रत्नावलीसमालोचनावसरे समवतारिततयात्र पुनरुक्तिभयादधिकं वक्तुं नोत्सहामहे। केवलं

प्रसङ्गतस्तद्विषये द्वित्राण्यपि वाक्यानि संक्षेपेण विवृत्य वक्तव्यशेषं नेतुमभिलषामः।

दृश्यते तावदेतन्नाटकाधीयानां प्रथमतो नान्दीश्लोकाधिगतत्वेन स्फुटमियमेव प्रतीतिरुपजाते यदेतस्य कवे बौद्धधर्म्मावलम्बित्वं बौद्धधर्म्मप्रवणत्वं वा; परं बोधिसत्त्वं प्रति सातिशयां रतिञ्च समीक्ष्य सैषा धारणा नूनं नानुचिता किमु अस्वाभाविकी चेति वक्तुं प्रभवन्ति सामाजिकाः। अन्यत्र च तथैव तस्य गौरी-इन्द्रादि-देवयाजित्वदर्शनात् तदपि वा कथमस्थान्तं वक्तुमुपयुज्यते।

अपि किलात्रैवैकतो गौर्य्यायतने मलयवती वीणया गौरी-माराधयति। यथा :—

"चेटी—(सप्रणयम्) भट्टिदारिए, चिरं क्खु वादअन्तीए कुदो ण परिस्समो अग्गहत्थाणं ? [भर्त्तृदारिके, चिरं खलु वादयन्त्याः कुतो न परिश्रमोऽग्रहस्तयोः ?]

मलयवती—(साधिक्षेपम्) हञ्जे, कुदो मे देईए पुरदो वीणं वादअन्तीए अग्गहत्थाणं परिस्समो [हञ्जे, कुतो मे देव्याः पुरतो वीणां वादयन्त्या अग्रहस्तयोः परिश्रमः ?]

चेटी—भट्टिदारिए, णं भणामि किं एदाए णिक्करुणाए पुरदो वाइदेण ? जा एत्तिअं कालं कस्सआजणदुक्करेहिं णिअ-मोवासणेहिं आराधअन्तीए अज्जवि ण दे पसादं दंसेदि। [भर्त्तृदारिके, ननु भणामि किमेतस्या निष्करुणायाः पुरतो वादितेन ? या एतावन्तं कालं कन्यकाजनदुष्क-रैर्नियमोपासनैराराधयन्त्या अद्यापि न ते प्रसादं दर्शयति।]

अन्यत्र पञ्चमाङ्के :—

मलयवती—( बद्धाञ्जलिरूर्द्धं पश्यन्ती ) भअवदि गोरि, तुए असत्तं, जहा—'विज्जाहरचक्कवट्टी भट्टा दे भविस्सदि' त्ति ता कहं मम मन्दभग्गाए किदे तुमं अलीअवअणा संवुत्ता ? [भगवति, गौरि, त्वया आज्ञप्तं यथा—'विद्याधरचक्रवर्त्ती भर्त्ता ते भविष्यति' इति; तत् कथं मम मन्दभाग्यायाः कृते त्वमलीकवचना संवृत्ता ? ]

ततः प्रविशति ससम्भ्रमा गौरी—महाराज जीमूतकेतो, न खलु साहसमनुष्ठातव्यम् ?

जीमूतकेतुः—अये ! कथममोघदर्शना गौरी !!

गौरी-(मलयवतीमुद्दिश्य) वत्से, कथमहमलीकवादिनी भवेयम् ?

( नायकमुद्दिश्य कमण्डलुजलेनाभ्युत्त्य ) :——

"निजेन जीवितेनापि जगतामुपकारिणः ।
परितुष्टास्मि ते वत्स, जीव जीमूतवाहनः ॥"

इत्यादि वचनसमूहैरेव तथार्थप्रतीतिः । परं रत्नावल्यां नान्दीश्लोकेऽपि शिवाराधनतत्परत्वमस्यावगम्य तत्र कथं बौद्धत्वपरिकल्पनस्यापि प्रकृष्टावसरः ? नितरामेतदुभयविधत्वञ्च तस्य धर्म्ममतमिति रूपकद्वयपर्य्यालोचनात् सर्व्वथा प्रतिपन्नोऽस्ति ।

तच्च चैनिकपर्य्यटकहुयेन-त्सानमहोदयेन स्वीयभारतभ्रमणवृत्तान्ते सम्यक् प्रकटीकृतं यत् :—'एष एव कविरेकदा बौद्धधर्म्मं बौद्धमूर्त्तिं वा अन्यदा सनातनपद्धतिं देवदेवीविग्रहं वा समानानुरागेणाभ्यर्च्चं र स्वीयशासनभूमिमतिदक्षतया शशास ।

तस्य राष्ट्राश्रये प्राय एव देवतायतनानां तथा बुद्धचैत्यानाञ्च संख्यानि तुल्यान्येवासन्' इति किमत्राधिकवचसा ।

एवं नाम यदेतन्नाटकस्य नागानन्दम् इति नाम, तेनेयमिवार्थः समाधीयते परमविवेचैराय्र्यमिश्रैर्य्यत् नागानाम् आनन्दः उत्साहो यस्मिन्नस्ति तन्नागानन्दं नाम नाटकम्। अत्र गरुड़भक्षितपन्नगानां पुनर्ज्जीवनप्राप्तिरूपस्य आनन्दस्य लाभतया तथार्थनामकरणम् "नाम कार्य्यं नाटकस्य गर्भितार्थप्रकाशनम्" इत्यालङ्कारिकोक्तिरिदमेव युक्तं नामेति धीरधियां हृदयम् । परं कवेरात्मवंशस्तु नागगोष्ठीत्वेन ख्याततया तद्वंशीयानामानन्दवर्णनमत्र निहितार्थः ।

एतत् किल नाटकं सततं मन्दाकिनीप्रवाह इव प्रवहति झटित्यानन्दरसधारा काव्यमध्ययितॄणां सचेतसां चेतसि प्रसादगुणत्वादि प्राचुर्य्येण। रूपकस्यैतस्य प्रथमतः समाप्तिं यावत् सर्व्वाङ्गमेवातिरमणीयदयावीररससंयुक्ततया प्रसभं हरति हृदयं सहृदयानाम्। अभिनयकाले चास्य कुतश्चिदननुभूतमिव स्वर्गसौन्दर्य्यमुपतिष्ठते। इदञ्च पारिजात-प्रसून-माल्यमिव कण्ठसमालम्बि स्वर्गीयमुपपादयति सातिशयमिव सौख्यम्। "निर्म्मेयं चरितं शुद्धं जगन्मङ्गलकारणम्" इत्युक्त्यैवदधीतमपि काव्यं केषामप्युपकारं नोपस्कुरुते तद्धि काव्यमुत्तमत्वेनाङ्गीक्रियते परमविवेचैरार्य्यमिश्रैः। किन्त्वत्र खलु लोकशिक्षोपयोगिनामुपदेशानां बहुलविलासतयातिहृद्यं शिक्षास्पदञ्चात्र जगति ।

अत्र यत् पूर्व्वेण पित्रोः शुश्रुषणं आश्रमस्थलस्य च वर्णनं

दयाया: संस्थापना च तानि तानि समधिकृत्य सुष्ठूपवर्णनमस्ति। यथा हि निर्व्वेदमुपवर्णयितुकामेन कविना नायकमुखेन प्रकटितम् :—

"रागस्यास्पदमित्यवैमि न हि मे ध्वंसीति न प्रत्यय:
　　कृत्याकृत्यविचारणासु विमुखं को वा न वेत्ति चितौ।
एवं निन्द्यमपीदमीप्सितफलप्राप्त्यै भवेद् यौवनं
　　भक्त्या याति यदीत्थमेव पितरौ शुश्रूषमाणस्य मे॥"

इति स्वल्पेनैव वचसा यत् संसारस्य नि:सारता पितरौ प्रति तनयस्यैतिकर्त्तव्यता, वैराग्यभावस्य च प्रवणता प्रकाशिता मन्ये तथात्वं न सर्व्वत्र सुसुलभमत्र जगति। अपि च :—

"वासोऽर्थं दययैव नातिपृथव: कृत्वा तरूणां त्वचा
　　भग्नालक्ष्य जरत् कमण्डलु तत: स्वच्छं पयो निर्झरम्।
दृश्यन्ते त्रुटितोज्झिताश्च वटुभिर्मौञ्ज्य: क्वचिन्मेखला
　　नित्याकर्णयता शुकेन च पदं साम्नामिदं पठ्यते॥"

इत्यत्र च यत् स्वल्पेनैव वचसाश्रमपदस्योपवर्णनमस्ति, तद्धि संसारोपरतामाश्रमिणामुपयुक्तत्वपरिचायकास्पदं परिकल्पनम्। अन्यत्र च देवायतने प्रथमसाक्षात्कृतजीमूतवाहनाङ्कुरितानुरागवती स्वाश्रमप्रत्यागमनाय कुलपतिकौशिकनिदेशशिष्यशाण्डिल्यवाचिता मलयवती (आत्मगतम्) "एक्कतो गुरुवअणं अस्सदो दइअदंसणसुहं त्ति गमणागमणाधिरूढं अज्ज वि मं दोलअदि हिअअं [एकतो गुरुवचनम्, अन्यतो दयितदर्शनसुखमिति गमनागमनाधिरूढमद्यापि मां दोलयति हृदयम्। (उत्थाय नि:श्वस्य

सलज्जं सानुरागञ्च नायकं पश्यन्ती तापससहिता ष्क्रिान्ता) ]"।

इत्यादिषु जीमूतवाहने मलयावत्या नितान्तमनुरक्तता व्यक्तोक्तता; वस्तुतो यथैव जायते प्रमोपचायविमलीकृतहृदयतायां सतां हृदयवृत्तिस्तथैवानया वाचा प्रतिपद्यते, एवमेवमवस्थैव सञ्जायते प्रियजनसन्निधानादपरत्र गमनोन्मुखतायां सतां प्रेमिकानाम्। एवं यन्मरणाय लतापाशयोजितकण्ठां मलयवतीम् :—

"न खलु न खलु मुग्धे साहसं कार्य्यमीदृक्
व्यपनय करमेतं पल्लवाभं लतायाः।
कुसुममपि विचेतुं यो न मन्ये समर्थः
कलयति स कथं ते पाशमद्बन्धनाय॥"

इत्यादिना प्रेमिकहृदयावेगधारां कुसुमपेलवताञ्च प्रणयास्पदे यथा यथा संस्थापयति कविः, तदतिस्वाभाविकं मनोहरञ्च काव्यजगति। अपरं यत्र मित्रावसुना हृतराज्यं वाचितस्य सर्व्वतो हिंसावृत्तिपरिशून्यजीमूतवाहनस्य मुखात् प्रत्यययामास-

"स्वशरीरमपि परार्थे यः खलु दद्यादयाचितः कृपया।
राज्यस्य कृते स कथं प्राणिवधक्रौर्य्यमनुमन्यते॥"

इत्यादि सर्व्वथा हिंसाशून्यमुपदेशमुपगृह्णन्तो मनुजाः प्रशस्यन्ते न किं शत्रुमित्रनिर्व्विशेषैः सर्व्वेषु धरणीपृष्ठेषु। एवं यत्रासन्नमृत्युरपरतेनाप्यभीतेनापि नागशिशुना शङ्खचूड़ेन सातिनिकटसुतवियोगजदुःखमुद्वहन्तीं जननीं प्रति संसारानित्यताया उपदेशः; स्वामिनं प्रति च निराधारायाः प्रीतेरुद्घोषणं; तदतिवैचित्रं नाम यद्गम्भीरार्थं स्वल्पयाकठिनेन वाचा प्रबोधयतीति।

अपि नाम नाटकस्यास्य घटना सर्व्वतश्चित्तविद्रावककरा पताकास्थानञ्च सातिशयमनोरमम्। यथा जायास्नुषाभ्यां समासीनेन जीमूतवाहनजनकेन जीमूतकेतुना—

"भुक्तानि यौवनसुखानि यशोऽवकीर्णं
राज्ये स्थितं स्थिरधिया चरितं तपोभिः।
श्लाघ्यः सुतः सदृशान्वयजा स्नुषेयम्
चिन्त्यो मया ननु कृतार्थतयाद्य—मृत्युः॥"

इति वाक्येन मृतुरं कामिति तदव्यवहितोत्तरकालमेव सिद्धराजेन विश्वावसुना जामातुर्जीमूतवाहनस्य वार्त्तामन्वेष्टुं प्रेषितस्य प्रतीहारिणः सुनन्दस्य सहसा तत्रागमनम्। तेन "जीमूतवाहनस्य" इत्यसमासवाक्योच्चारणाज्जीमूतवाहनस्य मृत्युरिति परिजनानां बोधोपपत्तिः।

यच्च पतत्रिपतित्रोटित्रुटितवता जीमूतवाहनेन भोजनात् क्षणं प्रतिनिवृत्तं गरुड़ं प्रति स्वीयालौकिकौदार्य्यस्य प्रकटनं तदतिविचित्रं परमाद्भुतञ्च दृष्टिवतां दृष्टिपथप्रवर्त्तकप्रदेशे। यथा हि:—"शिरामुखैः स्यन्दत एव रक्त-
मद्यापि देहे मम मांसमस्ति।
तृप्तिं न पश्यामि च ते महात्मन्
किं भक्षणात् त्वं विरतो गरुत्मन्।" इति

अहो! किं नाम व्रतम्? कीदृक् धैर्य्यम्? कीदृशी वा तितिक्षा!! यमदशनमध्यादिव तच्चञ्चूतो वेदनाभ्यर्दितान्तःकरणमुमुर्षोरपि विद्विषं प्रति ईदृश्येव वाणी किं न सर्व्वथैव

प्रशस्यतमा, त्रिलोकीनाञ्च वाङ्मनसयोरप्यगोचरा, स्वर्गसुधा-ह्रदस्राविणी पीयूषधारेव समाप्यायति तरां विनश्वरे दुःखमये जगति नानाक्लेशाभ्यर्द्दितान् मर्त्त्यान्। अपि च ईदृशावस्थोपगतस्यापि शेषनिःश्वासमात्रोपचितस्य गरुड़ाय यन्नितकथनं तद्वि सकललोकनिषेवणीयम्, यथा :—

"नित्यं प्राणाभिघातात् प्रति विरम कुरु प्राक्कृतस्यानुतापम्
यत्नात् पुण्यप्रवाहं समुपचिनु दिशन् सर्वसत्त्वे ष्वभीतिम्।
मग्नं येनात्र नैनः फलति परिणतं प्राणिहिंसासमुत्थं
येनैतद्वारिपूरे लवणकणमिव क्षिप्तमन्तर्ह्रदस्य ॥"

इममुपदेशं समुपलभमानः के नाम दुश्चारिणः पापपङ्किल-पथविचरणजैर्महद्भिरिव दुःखैरहर्निशं दंदह्यन्ते ? मन्यामहे एवमित्थं वदतो जीमूतवाहनस्य महामहिममयी वाणी समीपवर्त्तिनी मूर्त्तिमती मातेव तान् सर्व्वतः परिरक्षति।

अपीदं नाम नाटकं प्रकर्षमुपाधत्ते काव्यजगति लोकचरित्र-शिक्षणीयविषयेषु सातिमात्रम्। यच्च योगशास्त्रोपगम्या तितिक्षा सा हि कविना काव्यावतरणया दिशा सामाजिकानां नयनपथ-वर्त्तिनी क्रियते। अनेनैव कवेर्लोकशिक्षापारदर्शिता सातिशया प्रतीयते; अव्याहता च सा शिक्षेति मुधैवाधिकवागोपन्यासेन।

**संक्षिप्तेतिवृत्तम् :**—प्रथमाङ्के :—जीमूतवाहनविदूषकयोः प्रवेशः; जीमूतवाहनेन विदूषकं प्रति यौवनस्य क्षणस्थायित्वकथनम्, पित्रोः शुश्रुषणत्वस्य सारत्वकीर्त्तनञ्च। विदूषकेण स्वभावशोभाया वर्णनम्। अत्रान्तरे वीणातन्त्रीलययुक्त-

संगीतस्य श्रवणञ्च। विदूषकेण अङ्गुलिनिर्द्देशेन जीमूतवाहनं देवतायतनं प्रदर्श्य तस्मादेव सङ्गीतध्वनिरिति स्थिरीकरणम्। ततोभययोः प्रवेशः। भूमावुपविशन्त्या वीणां वादयन्त्या मलयवत्या किङ्कर्य्या सह प्रवेशः। मलयवत्याः गीतम्। तत्श्रवणे जीमूतवाहनविदूषकयोस्तर्कः, मलयवत्याः किङ्कर्य्यैश्च स्वप्नकथनम्। अस्मिन्नवसरे विदूषकस्य तत्र प्रवेष्टुमनिच्छन्तं जीमूतवाहनं बलादाकृष्य प्रवेशः। मलयवत्याः जीमूतवाहनस्य च परस्परं प्रति रागाभिव्यक्तिः। ततस्तापसस्य प्रवेशः, तेन कुलपतिविश्वामित्राज्ञायाः विज्ञापनम्। तेन सह मलयवत्याः प्रस्थानम्। जीमूतवाहनेन मध्याह्नसमयस्य वर्णनञ्च।

द्वितीयाङ्के:—प्रथमं मनोहारिका ततश्चतुरिका नाम्नी किङ्कर्य्योः प्रवेशः। ताभ्यां परस्परं मलयवतीविरहोपस्थितेराख्यानम्। तदुपशमनाय चन्दनलताकुञ्जं मलयवती गमिष्यतीति चतुरिकया कथनं प्रस्थानञ्च। ततो दासीसहितोत्कण्ठितायाः मलयवत्याः प्रवेशः। तस्याः विरहोपशमनाय किङ्कर्य्या विविधोपायस्यानुष्ठानम्। ततो जीमूतवाहनविदूषकयोः प्रवेशः। जीमूतवाहनस्य विरहवर्णनम्। जीमूतवाहनेन मलयवतीप्रतिकृतेर्लिखनम्। मित्रावसोः प्रवेशः; तेन जीमूतवाहनेन सह मलयवत्याः परिणयस्य प्रस्तावः। मलयवतीमजानता जीमूतवाहनेन तत् प्रत्याख्यानम्। तत् श्रवणेन मलयवत्याः अभिमानं लतापाशेनोद्बन्धनञ्च। दास्याः सोद्वेगाह्वानेन जीमूतवाहनविदूषकयोस्तत्रागमनम्। जीमूतवाहनेन लतापाशात् मलयवत्याः मोचनं हस्तग्रहणञ्च।

अत्रावसरे कस्याश्चित् किङ्कर्य्याः प्रवेशः; तया जीमूतवाहन-पितुरत्र विवाहे सम्मतिरस्तीति विज्ञापनम्। विवाहनेपथ्यादि-विधानार्थं मलयवतीं गृहीत्वा दास्याः प्रस्थानम्। पितृचरण-बन्धनाय विदूषकेण सह जीमूतवाहनस्य प्रस्थानम्।

तृतीयाङ्कः—चषकहस्तस्य मत्तविर्चित्रविह्वलवेशविटस्य तथा स्कन्धारोपितसुराभाण्डचेटस्य च प्रवेशः। विटेन सुरायाः प्रशंसा, मलयवतुद्वाहसमापनस्य तु व्यक्तीकरणञ्च। विदूषकस्य कुसुमाकरोद्याने प्रवेशः तत्र विदूषकस्य शीर्षस्थसन्तान-शेखरपुष्पगन्ध-लुब्धैर्मधुकरैस्तस्योद्वेजनम्। तस्मादेव विदूषकेण स्त्रीवेशस्य परिग्रहः। विटेनावगुण्ठनधारिणो विदूषकस्य कण्ठमाश्लिष्य मुखे ताम्बूलं दातुमुद्योगः। मद्यगन्धात् विदूषकेण सातिशयविरक्तेः प्रकटनम्। इत्यवकाशे विटप्रणयिन्याः नवमालिकादास्याः तत्रो-पस्थितिः। विटस्य तस्याश्चरणे पतनम्। अत्रावसरे तस्मादन्तर्धातुं विदूषकस्य चेष्टा। चेटेन विदूषकयज्ञोपवीतस्याकर्षणं तस्माद्-यज्ञोपवीतस्य त्रोटनञ्च। नवमालिकाज्ञालब्धेन विटेन विदूषकस्य सम्माननम्। विदूषकस्य नवमालिकाचरणे पतनोद्योगः; नवमालि-कया च तस्य प्रतिवारणम्। विटेन विदूषकस्य अनुनयम्, 'नव-मालिकया सह आपणं गमिष्यामि' इत्युक्त्वा विदूषकाज्ञागृहीतस्य विटस्य तस्मात् प्रस्थानञ्च। गृहीतनेपथ्यया मलयवत्या सह जीमूतवाहनस्य प्रवेशः। तेन नवोढावध्ववस्थायाः वर्णनम्। चतु-रिकानिर्द्दिष्टेन पथा दम्पत्योः कुसुमाकरोद्याने गमनम्।

तत्र जीमूतवाहनेन स्वभावशोभायाः मलयवत्याश्च वर्णनम्।

दासीवचसा विदूषकेण चक्षुषोर्मिलनम्। अत्रान्तरे तया तमालपत्ररसेन विदूषकमुखस्य नीलीकरणम्। तद्दर्शयतोर्दम्पत्योः परस्परमुखविलोकनेन मन्दस्मितम्। विदूषकेण दण्डमुत्तोल्य दासीं प्रहर्त्तुमुद्योगः, तस्मात् प्रस्थानञ्च। तस्य सान्त्वनाव्यपदेशेन दास्यापि प्रतिगमनस्योद्योगः। मलयवत्या च 'हञ्जे, चतुरिके, किं मां एकाकिनीम् उज्झित्वा गच्छसि' इति वचसा तस्यागमने निषेधः। चतुरिकया च 'एवमेकाकिनी चिरं भव' इत्युक्त्वा तस्मात् प्रयाणम्। सहसोपागतया दास्या मित्रावसोरागमनस्य ज्ञापनम्। तया सह मलयवत्याः प्रस्थानम्। मित्रावसोरुपस्थितिः। मित्रावसुना जीमूतवाहनान्तिके मतङ्गेन तस्य राज्यं हृतमिति विज्ञाप्य तद्वधाय अनुमतेः प्रार्थना। जीमूतवाहनेन तत्रानभिमतस्य प्रकाशनम्। मित्रावसोः क्रोधोपशमनाय जीमूतवाहनस्य तेन सह अभ्यन्तरे प्रवेशः। जीमूतवाहनेन दिवसशेषस्य वर्णनाञ्च।

चतुर्थाङ्के:— गृहीतरक्तवस्त्रयुगलकञ्चुकिनः प्रतीहारस्य च प्रवेशः। कञ्चुकिना स्वजरायाः राजकार्य्यस्य च अनुकरणत्वस्याख्यानम्। महिष्यादिष्टगृहीतवस्त्रयुगलस्य कञ्चुकिनः वस्त्रदानाय जामातुः सकाशे किमु राजपुत्र्याः सकाशे अग्रे गमनविषये तर्कः। प्रतीहारवसुभद्रेण राजपुत्र्यान्तिके अग्रे गमनाय उपदेशः। कञ्चुकिपृष्टेन प्रतीहारेण राजाज्ञाज्ञापनाय मित्रावसुसमीपगमनस्याख्यानम्। जीमूतवाहनस्य मित्रावसोश्च प्रवेशः। जीमूतवाहनेन वैराग्योदये वनवासे अर्थिन उपकारादृते सर्व्वमेवासुखमिति कीर्त्तनम्। मित्रावसुना समुद्रजलोच्छ्वासदर्शनाभिलाषिणो

जीमूतवाहनस्य तद्दर्शनार्थं प्रतिबोधनम्। मित्रावसुना नागास्थि-दर्शनात् पर्वतसानुभ्रान्तस्य जीमूतवाहनस्य भ्रमस्यापनोदनम्। जीमूतवाहनस्य तदर्थं खेदः। मित्रावसुना जीमूतवाहनाय "एकदा बहुसर्पविनाशात् खगपतिना सह पन्नगराजेन नियमो विहितो यत् गरुड़भक्षणाय प्रतिदिनमेकैकोऽहिरेष्यति" इति वचनस्याख्यानम्। जीमूतवाहनस्य एकस्यापि नागरक्षार्थं स्वशरीरार्पणे अभिलाषः। तत्र क्षणे प्रतीहारस्य प्रवेशः; तेन मित्रावसोः कर्णे राजाज्ञायाः श्रावणम्।

प्रतीहारेण सह जीमूतवाहनाज्ञागृहीतस्य मित्रावसोः प्रस्थानम्। जीमूतवाहनेन नेपथ्यात् "हा पुत्रक शङ्खचूड़, कथं व्यापाद्यमानोऽद्य किल त्वं मया प्रेक्षितव्यः" इति करुणवाक्यस्याकर्णनम्। ततस्तस्य तद्विषये तर्कः। रुदत्या वृद्धया अनुगम्यमानस्य शङ्खचूड़स्य वासुकिकिङ्करेण सह प्रवेशः। शङ्खचूड़जनन्याः पुत्रार्थं विलापः। वासुकिकिङ्करस्य वासुकिनिदेशं शङ्खचूड़ं श्रावयित्वा वध्यचिह्नं रक्तवस्त्रयुगलं तस्मै समर्प्य शनैः शनैः तस्मात् प्रस्थानम्। शङ्खचूड़जनन्याः पुत्रार्थं विलापः। शङ्खचूड़ेन तस्याः सान्त्वनम्। जीमूतवाहनस्य तयोः सन्मुखे गमनम्। तं दृष्ट्वा गरुड़भ्रान्त्या वृद्धायाः मूर्च्छा। शङ्खचूड़ेन तद्भ्रान्तिं निरस्य जीमूतवाहनस्य देहे महापुरुषलक्षणचिह्नस्य वर्णनम्। जीमूतवाहनस्य शङ्खचूड़-देहविनिमये आत्मशरीरदाने सङ्कल्पः। शङ्खचूड़ेन तस्य जनन्या च तदाकर्ण्य कर्णौ पिधाय तादृशे साहसिके कार्ये तस्य निवारणम्। शङ्खचूड़ेन मातृचरणयोर्वन्धनम्। ततः शङ्खचूड़स्य "यावदहमपि

अदूरे भगवन्तं दक्षिणगोकर्णं प्रदक्षिणीकृत्य स्वाम्यादेशमनुतिष्ठामि" इत्युक्त्वा प्रस्थानं, वृद्धया च तस्यानुगमनम्।

ततः प्रविष्टेन कञ्चुकिना जीमूतवाहनाय महिषीप्रेषितवस्त्रयुगलस्य प्रदानम्। तस्य निष्क्रमणञ्च। जीमूतवाहनेन तद्वाससा स्वशरीरमाच्छाद्य वध्यशिलायां शयनम्। गरुडस्यागमनम्। तेन जीमूतवाहनस्य ग्रहणम्। ततः आकाशात् पुष्पवृष्टिः, दुन्दुभेश्च स्वननम्। तस्माद् गरुडस्य विस्मयः। गरुडेन क्षणं विचिन्त्य मम पक्षवायुना पारिजातपुष्पाणामिव पतनम्, कल्पान्तं संभाव्य सम्वर्त्तादिमेघानामिवायं शब्द इति च मननम्। जीमूतवाहनस्य परितोषः। तं गृहीत्वा गरुडस्य मलयपर्व्वतोपरि प्रस्थानम्।

पञ्चमाङ्कः—गरुडभयशङ्कितेन राज्ञा विश्वावसुना जीमूतवाहनस्य वार्त्तामन्वेष्टुं प्रतीहारस्य प्रेषणम्। पत्नीवधूसमेतस्य जीमूतकेतोः समीपं तस्यागमनम्। जीमूतकेतुना सर्वभोगोल्लेखादनन्तरं 'चिन्त्यो मया ननु कृतार्थतयाद्य मृत्युः' इत्युच्चरिते तत्क्षणादेवागतस्य प्रतीहारस्य 'जीमूतवाहनस्य' इत्युक्तिः। तेनामङ्गलशङ्किताभ्यां दम्पतीभ्यां भर्त्तुरनिष्टमनुभवत्या मलयवत्या च जीमूतवाहनामङ्गलस्य चिन्तनं तत्कथोपकथनञ्च। जीमूतवाहनस्य पापोपसमनकाङ्क्षिणा जीमूतकेतुना सूर्य्यस्य आराधनम्। तस्मिन्नेव क्षणे आकाशात् जीमूतकेतोश्चरणे कस्यचित् शिरोरत्नस्य पतनम्। तत् कस्येति तेषां वितर्कः। गरुडभक्षितस्य कस्यचिन्नागस्येति प्रतीहारवचनात् तेषां प्रत्ययः। प्रतीहारस्य प्रस्थानम्। ततो रक्तवस्त्रसंवीतस्य शङ्खचूडस्य प्रवेशः, तस्य

विलापश्च। शङ्खचूडेन स्वाख्यानस्य वर्णनम्। पतिपुत्रशोकेन तेषां परिवाराणां बहुविलापः। शङ्खचूडेन सान्त्वनम्। मर्त्तुमभिलषतां जीमूतकेतुपरिवाराणाम् साग्निकत्वेन अग्न्याधानार्थं गमनम्। शङ्खचूडेन रक्तबिन्दुपङ्क्तेरनुसरणम्। मलयाद्रिचूडायां गरुडावस्थितेरवलोकनञ्च। भक्ष्यमाणस्य जीमूतवाहनस्य हृष्टत्वमवलोक्य गरुडस्य विस्मयः, परिचयार्थं चेष्टा च। तत्र क्षणे शङ्खचूडस्य प्रवेशः, तेन स्वस्य नागत्वपरिचयेन प्रत्यभिज्ञानस्य प्रदर्शनम्, जीमूतवाहनपरिचयस्य च प्रदानञ्च। लब्धपरिचितस्य गरुड़स्य तत्रानुतापः। तदनन्तरं पत्नीवधूसमेतस्य जीमूतकेतोः गरुड़समीपे प्रवेशः। तेषां परिवेदनं मोहश्च। मोहापगमे गरुड़ं प्रति वृद्धायाः खेदवचनम्। जीमूतवाहनेन तस्याः निवारणम्। गरुडेन जीमूतवाहनान्तिके निजकृतपापोपसमानार्थमुपदेशस्य पृच्छा। जीमूतवाहनेन आजन्मार्ज्जितहिंसादिपापेभ्यः अनुतापादिरूपप्रायश्चित्तव्यवस्थायाः कथनम्। गरुडेनापि तदङ्गीकरणञ्च। जीमूतवाहनेन शङ्खचूडं निजगृहं प्रत्यागन्तुमनुरोधः; शङ्खचूडस्य तूष्णीमवस्थानम्। जीमूतवाहनाज्ञाधिगतेन शङ्खचूडेन जीमूतवाहनहस्तयोरेकत्रीकरणम्। बध्वाञ्जलिना जीमूतवाहनेन सर्व्वेषामन्तिके शेषविदायस्य प्रार्थनम्। जीमूतवाहनस्य मृत्युः। सर्वेषां करुणविलापः। गरुड़स्यामृतहरणाय स्वर्गे गमनम्। जीमूतकेतोश्चितासज्जार्थं शङ्खचूड़ं प्रति निदेशः। रुदत्या मलयवत्या गौर्य्याः समीपे प्रार्थना। गौर्य्याः आगमनम्। समागतया तया कमण्डलुजलेन जीमूतवाहनस्योज्जीवनम्। जीवितजीमूतवाहनेन गौर्य्याः

चन्दनम्। मेघशून्यवृष्टिपातेन सर्व्वेषां विस्मयः; ततो गौर्य्या 'पक्षिपतिना देवलोकात् इयममृतवृष्टिः पातिता' इत्युक्ता गरुड-भक्षितपन्नगसाराणामङ्गुल्या परिदर्शनम्। तत् कङ्कालसर्परूपत्व-प्राप्तेरवलोकनञ्च। परितुष्टया गौर्य्या जीमूतवाहनाय विद्याधर-चक्रवर्त्तित्वपदरूपवरस्य प्रदानम्। ततश्च भरतवाक्यञ्चेति।

**नायकादिसिद्धान्तः**—अस्य नायको जीमूतवाहनो धीरोदात्तः। नायिका च स्वकीया मुग्धा। रतो वामा। शङ्खचूड-पन्नगावलम्बनम्; तस्योक्तिप्रभृत्युद्दीपनानि; करुणवाक्यादयोऽनु-भावाः। उत्साहः स्थायी, वीरोनाम रसः, स च दयावीर-संज्ञकः। शृङ्गारकरुणादयोऽङ्गरसाः, ते च मलयवतीदर्शनादारभ्य शङ्खचूडदर्शनं यावत् परिस्फुटाः। धृत्यादयः सञ्चारिभावाः। रतिः स्थायी, विदूषकाद्याः सहायाः। रीतिः पञ्चाली, गुणो माधुर्य्याख्यः, प्रस्तवनावलगिकाख्येति।

—०००(*)०००—

## कर्पूरमञ्जरीसमालोचनम्—

कर्पूरमञ्जरी नाम सट्टकं कविना राजशेखरेण प्रणीतम्। सट्टकलक्षणन्तु साहित्यदर्पणे उक्तम्:—

"सट्टकं प्राकृताशेषपाठ्यं स्यादप्रवेशकम्,
न च विष्कम्भकोऽप्यत्र प्रचुरश्चाद्भुतोरसः।
अङ्का यवनिकाख्याः सुरः स्यादन्यनाटिकासमम्॥" इति

लक्षणलक्षिततयास्यामूलं प्राकृतभाषया रचितम्। इयमेव हि भाषा सकलजनोच्चारनीयतया नवनवभावोन्मेषणतया मधुरपद-बन्धप्रचुरतया च कवीनामतिसन्तोषदायिका। तथा हि:—

"[नवमत्थदंसणं सण्णिवेससिसिराओ बन्धसहिओ।
अविरलमिणमो आभुवणबन्धमिह णवर पअअम्मि॥]
नवमर्थदर्शनं सन्निवेशशिशिरबन्धद्वय:
अविरलमेतदाभुवनबन्धमिह केवलं प्राकृते॥"

अपि च:—

"[हरिसविसेसो विअसओअ सउल्लाउअ अच्छीण।
इह वहिमुहत्तो अन्तमुहोअ हिअअस्स विप्फुरइ॥]
हर्षविशेषो विकासको मुकुलैकारकश्चाक्ष्णो:।
इह वहिर्म्मुखोऽन्तर्म्मुखश्च हृदयस्य विष्फुरति॥"

कविना राजशेखरेणैवालोक्तम्:—

"[परुसा संकिअबंधा पाउदबंधो वि होइ सुउमारो।
पुरुसमहिलाणं जेत्ति अभिहंतरं तेत्ति अमिमाणं॥]
परुषा: संस्कृतबन्धा: प्राकृतबन्धोऽपि भवति सुकुमार:।
पुरुषमहिलानां यावदिहान्तरं तावत् तेषु॥"

इत्यादिभिर्व्वचोभि: या हि संस्कृता वाणी सा हि समासादि-बाहुल्येनात्यतिगौरवमयी, बहुवव्यञ्जनवर्णान्विता, कष्टोच्चार-नीया चेति कारणकूटैस्तदपेक्षया कवीनामेषातिवल्लभा सदामो-ददायिनी चेति स्फुटत एव प्रतिपत्तिरस्ति। एतद्विस्तरतो ज्ञातु-मिच्छ भिर्म्मत्सम्पादितप्राकृतलक्षणस्य भूमिकानुसन्धानीया।

परमार्थमिश्राः, अयि मदीयप्रियपाठकाः, सुकुमाराः कुमाराश्च अवगच्छन्तु भवन्तः यत् किलानेन कविना प्राकृतं दृश्यकाव्यं रचितं तथापराणि विद्धशालभञ्जिताख्या नाटिका प्रचण्डपाण्डवापरनामकं बालभारतं बालरामायणञ्चेति त्रीणि संस्कृतदृश्यकाव्यानि रचितानि ।

अस्य खलु कवेरवस्थानसमयस्तु बहुभिरेव प्रत्नतत्त्वज्ञैः ख्रीष्टीयचतुर्दशशताब्द्यामनुमीयते। वस्तुतस्तस्यावस्थानकालः ख्रीष्टीयाष्टमशतकस्य मध्यभाग एव निर्णेतुं शक्यते। यतोऽमरकोषान्यतमप्रसिद्धटीकाकृता क्षीरस्वामिनामरकोषे विद्धशालभञ्जिकातः कश्चित् श्लोकः समुदाहृतः। तस्य किल समयः ख्रीष्टपञ्चाशदधिकसप्तशतशके [ ७५० ] येन काश्मीरमण्डलमभिपालयतो राज्ञो जयसिंहस्योपाध्यायाः स्वामिचरणाः। परमेकषष्ठोत्तरसप्तशतख्रीष्टाब्दे [ ७६१ ] काश्मीराधिपत्यं कुर्व्वन् महेन्द्रपालनृपतिः स्वशिष्यत्वेन परिचीयते कविना स्वयमेवास्य भूमिकायाम्। तथा हि :—

“सूत्रधारः—[को उण तस्स कइ] कः पुनस्तस्य कविः ?

पारिपार्श्विकः—

[भाव, कहिज्जदु एदं को भणइ रअणिवल्लहसिहंडो ।
रहुउलचूड़ामणीमणिणो महिंदपालस्स को अ गुरु ॥]
भाव, कथ्यतामेत् को भण्यते रजनीवल्लभशिखण्डः ।
रघुकुलचूड़ामणेर्म्महेन्द्रपालस्य कश्च गुरुः ॥

सूत्रधारः—[(विचिन्त्य) पञ्होत्तरं क्खु एदं (प्रकाशं) राअसेहरो]

प्रश्नोत्तरं खलु एतत्। राजशेखर:।" इति

वस्तुतो राजशेखरनाम्ना प्रसिद्ध: कविद्वय आसीदिति प्रायश एव धीरधीभिरनुमीयते। तत्रैकस्तावत् प्रसिद्धदृश्यकाव्यरचयिताष्टमशताब्दीमध्यवर्त्ती, द्वितीयस्तु कवीनां प्रशस्तिगाथारचयिता तत्परसमयवर्त्ती। यत: कविप्रशस्तिगाथासु राजशेखरकृतित्वेन प्रसिद्धे तस्मिन्नेवमेवमुपलभ्यते यत्:—

"भासोरामिलसोमिल्लौ वररुचि: श्रीसाहसाङ्क: कवि:
मेण्ठो भारविकालिदासतरला: स्कन्ध: सुबन्धुश्च य:।
दण्डी बाणदिवाकरौ गणपति: कान्तश्च रत्नाकर:
सिद्धा यस्य सरस्वती भगवती के तस्य सर्व्वेऽपि ते॥"

इत्यत्र रत्नाकरस्य नाम लिखिततया तत्कालपरवर्त्ती किलैष राजशेखर: इति सर्व्वत: प्रतिपन्नोऽस्ति। रत्नाकरो हि खीष्टीय-नवमशकान्तर्गतत्वात्। एतद्विस्तरेण कविजीवनीषु प्रतिपादित-तयात्र पुनरधिकं वक्तुं नोत्सहामहे।

दृश्यते तावदलङ्कारादिषु प्रायश एव सदुक्तोदाहरणस्थलेषु कवेरस्य ग्रन्थत उदाहरणंप्रस्तूयते भावमिश्रै:, निरतामस्य किञ्चिद्विशेषत्वं प्राचीनत्वञ्चास्तीति सहजत एव प्रतिपन्नोऽस्ति।

अभिनयकाले च पात्राणां यत् स्वाभाविकघटनोपन्यासै: सर्व्वथा दर्शकानां चेतसि समुत्पाद्यते आनन्दरसधारा, निरतिशयञ्च कौतुकं। मन्ये तादृशी रचनाभङ्गी रसावतारणा च न सर्व्वत्र सुलभेति। यथा प्रथमयवनिकान्तरे चेटीविदूषकयो: परस्परं कलह:, तत्र च विदूषकस्य पराभव:, प्रस्थानसमये च तस्य

आकाशवाणी, भैरवानन्देन सह पुनः प्रवेशः, भैरवानन्देन कर्पूरमञ्जर्य्याः आनयनमित्यादि घटना तेषामुक्तिः प्रत्युक्तिश्च वस्तुतः कौतुकावहा हास्योद्दीपिका च। अलङ्कारध्वनिप्रभृतिकाव्यगुणाश्चात्र प्रथमत आरभ्य समाप्तिं यावत् पर्य्याप्तः परिलक्ष्यते।

प्रथमं यन्नान्द्यां "[भद्दं भोदु सरस्सइत्र] भद्रं भवतु सरस्वत्याः" इत्यादि श्लोके वैदर्भी-मागधी-पाञ्चालिकेति रीतित्रयाणां नामानि कविना नैपुण्येन परिगुम्फ्य तत्तद्रीतेरत्र समावेशो भवतीति सूचितम्। द्वितीये च श्लोके शृङ्गाररसस्य प्रधानार्थं ध्वनिः। तृतीये च यत् :—

"[ससिखंडमंडणाणं सम्मोहनासाणं सुरगणपिआणं।
गिरिसगिरिंदसुआणं संघातो वो सुहं दाउ ॥]
शशिखण्डमण्डनयोः सम्मोहनाशयोः सुरगणप्रिययोः।
गिरिशगिरीन्द्रसुतयोः संघटना वः सुखं ददातु ॥" इति

अत्र महेश्वरवर्णनमिषेण राज्ञश्चन्द्रपालस्य तथा कर्पूरमञ्जर्य्याश्च वर्णनांशिकेन प्रतिपादिता। यथा—शशिखण्डमण्डनयोः शुभ्रवेशधारिणोः, अथवा सौम्यमूर्त्तिमतोः, मोहनाशयोः मोहने सुरते या आशा अभिलाषः, तया सह वर्त्तेते इति तयोस्तयोः, सुरगणप्रिययोः सुरगणानां सज्जनानां प्रियौ सन्तोषकरौ यद्वा सुरगणाः पण्डिताः प्रिया वल्लभा ययोः तयोर्नायिकानायकयोः गिरिशगिरीन्द्रसुतयोः हरपार्व्वत्योः संघटना सम्मेलनं यथातथानयोर्म्मेलनं वः युष्माकमभिनयदर्शनार्थिनां सुखमानन्दं ददातु इत्ययंस्तु गूहितः। अपि च यत् :—

"ईसारोसप्पसादप्पणदिसु बहुसो सग्गगंगाजलेहिं
आमूलं पूरिदाए तुहिणअरअलरुप्पसुत्तीअरुद्दो ।
जोह्वामुत्ताफल्लिलं णदमउलिणिहित्तग्गहत्थेहिं दोहिं
अग्घं सिग्घं वदंतो जअइ गिरिसुआपाअपंकेरुहाणं]
ईर्षारोषप्रसादप्रणतिषु बहुशः स्वर्गगङ्गाजलैः
आमूलं पूरितया तुहिनकरकलारूप्यशुक्त्या रुद्रः ।
ज्योत्स्नामुक्ताफलाढ्य' नतमौलिनिहिताग्रहस्ताभ्यां द्वाभ्या-
मर्घं शीघ्रमिव ददज्जयति गिरिसुतापादपङ्केरुहयोः ॥"

इत्यत्र सपत्नीकेन नमितमौलिना गङ्गाधरेण शिरोधिगतत्वेना-तिशयवल्लभतमायाः गङ्गायाः वारिपूरिताभ्यां सम्पुटाभ्यां यद्-गिरिसुतापादपद्मार्चनमुक्त' तच्च भङ्ग्या सपत्नीकेनापि राज्ञा चन्द्र-पालेन पत्न्यन्तरायाः कर्पूरमञ्जर्य्या निषेवणरूपमिति ध्वनितम् ।

द्वितीययवनिकान्तरे विचक्षणाविदूषकयोः राज्ञश्च महिषी-गृहितायाः कर्पूरमञ्जर्य्या विषये यस्तावत् परस्परं संलापः सोऽति-सुखावहः आनन्दप्रदश्च काव्यरसरसिकानामतिमात्रम् । एवं दोलाधिरूढां कर्पूरमञ्जरीं दृष्ट्वा राज्ञो यश्चित्तविकारः समुपस्थितः तदुपशमनार्थञ्च विदूषकेण तमालतरोरन्तरिति सन्निवेशितस्य भूपते-र्यत् कर्पूरमञ्जर्य्याः कुरुवकादीनां दोहदार्पणावलोकनं तच्च लालित्यपरिपूर्णं लेखनभङ्गिमान्वितं मानसप्रीतिप्रदञ्च काव्य-पाठार्थिनाम्—अभिनयपर्य्येचितानाञ्च पीयूषवर्षिनयनानन्दधारा-सन्दोहास्पदमिति सर्वथा वक्तुमुपयुज्यते । तदवसरे च वैतालि-कानां मुखेन यत् सन्ध्यावर्णनं तेन नूनमेवमेवं प्रदिपादितं

कविना, यः सर्व्वातिशयी प्रखरस्तपनः स किल दक्षिणनायकः निखिलकमलकुलप्रीणनत्वात् सोऽपि संप्रति स्वप्रियसीं विहाय प्रतिनिवर्त्तते, तस्य प्रतिगमने च पत्नीसमागमसहायमित्रविरहिततया चक्रवाकमिथुनौ च परस्परं वियुज्य दम्पती विच्छेद-दुःखमनुभविष्यतः, अतोऽदिनमनिसदृशः सौर्य्यवीर्य्यान्वितो महाराजोऽपि स्ववल्लभामपहाय यथाकर्त्तव्यं विदधात्विति भावार्थ-परिकल्पने महान्तः सामाजिका एवात्र प्रमाणम् ।

परमस्य कविना नर्म्मसचिवस्य विस्मयकरां चातुरीं प्रत्युत्पन्नां मतिञ्च परिकल्प्य स्वीयवैशिष्टं विदग्धत्वञ्च प्रतिपादितमादितः समाप्तिं यावत्। दृश्यते तावदेकतस्तेन विरहगुरुकाभिभूतस्य राज्ञः समीपं तद्विच्छेददैन्यदूनितमानसीं कर्पूरमञ्जरीं सङ्गमय्य कौशलेन तस्मादपसारितवान् विदूषकः । यथा :—

"[ गब्भघरवासेण सेअसलिलसित्तगत्ता संभूदा तत्थभोदी कप्पूरमञ्जरी । ता इमं सिचअञ्चलेण विजइस्सं दाव । (तथा कुर्वन्) हा हा कधं वत्थिल्लपवणेण णिव्वणो प्पदीवो । (विचिन्त्य स्वगतं) भोदु । लीलोज्जानं ज्जेव्व गच्छम्ह (प्रकाशम्) भो अंधआरणच्चिदं वट्टदि । ता णिक्कामम्ह सुरङ्गामुहेण ज्जेव्व पमदुज्जाणं दाव] ।

गर्भगृहवासेन स्वेदसलिलसिक्तगात्रा सम्भूता तत्रभवती कर्पूरमञ्जरी । तदिमां सिचयाञ्चलेन वीजयिष्यामि तावत् । हा हा ! कथं वस्त्राञ्चलपवनेन निर्व्वाणः प्रदीपः ? भवतु । लीलोद्यानमेव गच्छामः । भोः ! अन्धकारन्टत्यं वर्त्तते । तन्निष्क्रामामः सुरङ्गामुखेनैव प्रमोदोद्यानं तावत् ।"

इत्येवं रूपा चातुरी सर्वत्रास्य समवलोक्यते। अत्र च साति-शयहास्यकारिणी किङ्करी विचक्षणा; सा च प्रणयिणोऽभिसार-कार्य्ये विचक्षणैव वक्तुमर्हाम:; तस्या: वाक्चातुर्येण कार्यंतस्व। तामन्तरा चेन्महिषीगृहिताया: कर्पूरमञ्जर्य्या: राज्ञा संघटनं सर्वथैव प्रतिहतमासीत्। अपि हि यदा राजपरिजनान्तिकं भैरवानन्देनालोकसामान्यायां कर्पूरमञ्जर्य्यामानीतायां तद्रूपलोलु-पस्य राज्ञो धनपालस्य चेतसि कुन्तलेशदुहितुश्च हृदये प्रथमसनु-रागवीजं समुद्भूतं, तद्धि विदूषकस्य सातिशयचेष्टाया: कौशलस्य च सुधामयं फलमन्तरा नान्यद्वक्तुमुपयुज्यते। यतोऽङ्गु तद्दृष्टु-मिच्छन् भैरवानन्दविज्ञापितो नरपतिरन्यदर्शनमकामयन् प्रथम-मेव नर्म्मसचिवं वाचयति स्त्रीरत्नदर्शनाय। यथा :—

"राजा—[वअस्स, तुए कहिं वि अपूव्वं दिट्टं महिलारअणं] वयस्य, त्वया कुत्रापि अपूर्व्वं दृष्टं महिलारत्नम्?

विदूषक:—[दिट्टं दाव] दृष्टं तावत्।

राजा—[कहे हि] कथय।

विदूषक:—[अत्थि एत्थ दक्खिणावहे विदव्भं णाम णअरं। तहिमए एकं कस्सारअणं दिट्टं। तमिहाणीअदु] अस्ति अत्र दक्षिणापथे विदर्भनाम नगरम्। तत्रमयैककन्यारत्नं दृष्टम्। तदिहानीयताम्।" इति।

भैरवानन्दोऽपि राज्ञ: परमसहाय: परहृदयस्तलसूक्ष्मदर्शी महाचतुर: कार्य्यकुशलीच। तेनानयो र्नायिकानायकयोश्चिर-मिलनं कौशलेन सङ्गमय्य स्वीयवैदुष्यं प्रकाशितम्। दृश्यते च

प्रयोजनोपगतोऽस्य कल्पनापि नीतेरन्तर्भूता, तया च विवाहवासरे महिषीं प्रतारयितुमसकृदेव कर्पूरमञ्जरीं सुरङ्गपथेन चालयित्वा परिशेषे सर्व्वं प्रकटीकृतम्। यथा:—

"भैरवानन्दः—(तं तस्या भावसङ्गमय्य विदूषकंप्रति) [तुम् सुट्ठु तरं भुल्लोसि जदो कप्पूरमञ्जरीए घणसारमञ्जरीत्तिनामान्तरं जाणासि] त्वं सुष्ठु तरं भ्रान्तोऽसि ? यतः कर्पूरमञ्जर्य्या घनसार-मञ्जरीति नामान्तरं जानासि।" इति

इत्थमेव भैरवानन्दमभीक्ष्य स्वतएव प्रतिपत्तिरुपजायते यद्-बहुशरदूर्द्धं समाजेषु जनसाधारणेषु च तन्त्रस्य तथा तान्त्रिकस्य चासीदप्रतिहतः प्रभावोऽव्याहता च गतिः। यतः सर्वत्रैव दृश्यते श्रूयते च कविरात्मनः सामयिकभावमुन्नीय स्वीयकवित्वसुषमया-साधारणप्रतिभया वा तं तमेव भावं किमु समाजचित्रं सम्यक् चित्रयति लौकिकेषु जगत्सु। सुतरामन्यामहे एतदपि तदाभाष-मन्तरा नान्यदिति सुधीभिर्व्विभावनीयमिति किमधिकेन।

**संक्षिप्तेतिवृत्तम्:**— प्रथमयवनिकान्तरे—विभवतः परि-जनैः सह राज्ञः महिष्याः विदूषकस्य च परिक्रमणम्। राज्ञा वसन्तसमयमधिकृत्य वर्णनम्। महिष्या अपि तद्वर्णनम्। नेपथ्ये वैतालिकयोरपि तथा वर्णनम्। चेटीविदूषकयोः कलहः, तेन विदू-षकस्य पराभवः, प्रस्थानञ्च। विदूषकस्य पुनः प्रवेशः, भैरवानन्दा-गमनसंवादस्य राज्ञे निवेदनम्; राजनिर्देशेन तेन सह पुनरागम-नम्। राज्ञः आश्चर्यदर्शनार्थं भैरवानन्दसमीपे प्रार्थना। गृहीत-विदूषकाभिमतस्य राज्ञः निर्देशवता भैरवानन्देन नायिकानयनम्;

तां प्रति राज्ञः अनुरागदृष्टिः। विदूषकप्रश्ने ननायिकायाः आत्मपरिचयः। तेन महिष्या मातृस्वसृकन्या कर्पूरमञ्जरीति अवधारणम्। तस्याः पञ्चदशदिवसावस्थानं भैरवानन्दसमीपे महिष्याः प्रार्थनम्, भैरवानन्दस्यानुमोदनञ्च। वैतालिकस्य सन्ध्यावर्णनेन राज्ञः प्रस्थानम्।

द्वितीययवनिकान्तरे :—कर्पूरमञ्जर्य्यर्थे राज्ञो निर्व्वेदः। विदूषकेण विचक्षणया च राज्ञः कर्पूरमञ्जर्य्याश्च अन्योऽन्यं प्रति उभयोर्व्विरहविकाराख्यानम्। राजविदूषकयोः कदलीगृहे प्रवेशः। तस्मात् दोलारूढायाः कर्पूरमञ्जर्य्याः ताभ्यामवलोकनम्। सहविचक्षणया देव्याज्ञापितया कर्पूरमञ्जर्य्या कुरुवकादीनां दोहददानम्। नेपथ्ये वैतालिकस्य सन्ध्यावर्णनम्।

तृतीययवनिकान्तरे:—राजविदूषकाभ्यां कर्पूरमञ्जरीविषयिण्या नानाकथाया आख्यानम्। कुरङ्गिकया सह कर्पूरमञ्जर्य्याः समागमः, राज्ञा सह मिलनञ्च। छलेन कुरङ्गिकाविदूषकयोस्तस्मात् प्रस्थानम्। नेपथ्ये वैतालीकस्यकनकचण्डस्य चन्द्रशोभावर्णनम्। तथा माणिक्यचण्डस्य च ज्योत्स्नावर्णनम्। नेपथ्यात् कोलाहलश्रवणेन सर्व्वेषां भीतिसञ्चारः।

चतुर्थयवनिकान्तरे :—राजविदूषकाभ्यां शुकमुखोच्चारितकथाश्रवणम्। तत्र च सारङ्गिकायाः प्रवेशः। तया च देवीनिदेशस्य कलाविमानगृहे राज्ञः स्थातव्यमिति निवेदनम्। राज्ञश्च स्वीकारोक्तिः। पुनः प्रविश्य सारङ्गिकया देव्या पद्मरागमणिमयी गौरी कृत्वा भैरवानन्देन प्रतिष्ठापिता स्वयञ्च दीक्षा गृहीता, तदर्थं

गुरुदक्षिणाङ्गीकृतायै देव्यै भैरवानन्देन महाराजस्य परिणय-प्रार्थना, तदनुमोदिताया देव्या वृत्तान्तमिदं, महाराजस्य ज्ञातार्थे मम प्रेषणमिति निवेदनम्। भैरवानन्देन वटतरुमूले सुरङ्गद्वारस्य चामुण्डया पिधानम्। सुरङ्गपथेन कर्पूरमञ्जर्य्याः समागमः। तदवलोकिताया देव्या विस्मयः। भैरवानन्दानुज्ञातायास्तस्याः पुनः स्वभवनगमनं पुनरागमनं पुनर्निर्गमनञ्च। भैरवानन्देन कर्पूरमञ्जर्य्याः घनसारमञ्जरीति नाम कथनम्। कर्पूरमञ्जर्य्याः राज्ञश्च विवाहनेपथ्यविशेषधारणम्। विदूषकस्य तत्र पौरहित्यग्रहणम्। दम्पत्योः भ्रमणं, हुतवहे अञ्जलेर्दानञ्च। भैरवानन्देन कर्पूरमञ्जर्य्याः घनसारमञ्जरीति नामान्तरज्ञापनम्। राज्ञा विवाहदक्षिणाप्रार्थिताय विदूषकाय शतग्रामस्य दानम्। सर्वेषां निष्क्रमणञ्च।

**नायकादिसिद्धान्तः**—अत्र नायकश्चन्द्रपालो धीरललितः। नायिकाकुन्तलेशदुहिता मुग्धा। दाक्षिणात्यनन्दिनी राज्ञः कृताभिषेका महिषी स्वीया। वसन्त-कुसुमचन्द्रोदयादिभिरुद्दीपनविभावाः। अन्योऽन्यचक्षुरादिक्रिया अनुभावाः, विषादौत्सुक्यस्मृत्यादिभिर्व्यभिचारिभावैरास्वादपदवीमारूढो रत्याख्यः स्थायिभावः। सम्भोगशृङ्गाररसोऽङ्गी, हास्यनिर्व्वेदादयोऽङ्गरसाः, विदूषकादयः सहायाः, रीतिः पाञ्चाली, गुणो माधुर्य्याख्यः, प्रस्तावना प्रयोगातिशयरूपा इति।

•••—(००)—•••

## विद्धशालभञ्जिका-समालोचनम्—

नाटिकान्तराधिशयाना विद्धशालभञ्जिका नाम नाटिका कविना श्रीराजशेखरेण प्रणीता। एतत्कविनाम्ना प्रसिद्धमेव कविद्वयं वर्त्तत इत्यनुमीयते धीरधीभिः। एकस्तावद् दृश्यकाव्य-रचयिता ख्रीष्टीयाष्टमशरदमध्यवर्त्ती; अपरः खलु कवीनां प्रश-स्तिगाथानिर्म्माता, तत् परकालवर्त्ती; कनिष्ठः स एवराज-शेखरः कविप्रशस्तिगाथायामाह :—

"भासोरामिलसोमिल्लौ वररुचिः श्रीसाहसाङ्कः कविः
मेण्ठो भारविकालिदासतरलाः स्कन्दः सुबन्धुश्च यः।
दण्डी वाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः
सिद्धा यस्य सरस्वती भगवती के तस्य सर्व्वेऽपि ते॥"

इत्यत्र पूर्व्वतनकविनामगणनायां कनिष्ठरत्नाकरस्य नामो-पलम्भात् तत् कालपरवर्त्तित्वमस्य राजशेखरस्य प्रतिपन्नोऽस्ति। रत्नाकरस्याविर्भावः कालः ख्रीष्टीयनवमशकः; नितरां तत् कालात् परतः किलास्य समय इति स्फुटतः प्रतिभाति।

गीर्व्वाणवाणीचरणाराधितेन महात्ममक्समूलरमहोदयेन एतन्नाटिकादिदृश्यकाव्यरचयित्रा कविराजशेखरेण समं कविप्रश-स्तिगाथारचयितृराजशेखरस्यैक्यमुपकल्पितम्; परं प्रबन्धकोषरच-यित्रा जैनराजशेखरेण सह अभिन्नत्वञ्च स्थिरीकृत्य तदीयाव-स्थानसमयः ख्रीष्टीयसप्तचत्वारिंशदधिकत्रयोदशशतकोऽवतारितः [१३४७]। पण्डितबुल्हारमहोदयेन प्रबन्धकोषनिबन्धो ग्राम्य-

संस्कृतभाषया सन्निबन्ध इति यत् सिद्धान्तितं तच्चाविचार्य्यैव मन्त्रितमिति बहुश एव प्रज्ञावतां हृदयम्।

हन्त भोः! बालरामायणस्य तथा अस्यामेव प्रस्तावनायां कविना राजशेखरेण स्वमकालजलदस्य प्रपौत्रतया निर्द्दिष्टितम्। यथा :—

"आकाशे:—सखे सोमदत्त, किमात्थ? अकालजलदस्य प्रणप्तुस्तस्य गुणगणः किमिति न वर्ण्यते?" इति। सुभाषितवल्यां सुकवितया कस्यचिद् दाक्षिणात्यकवेरकालजलद इति नामोपलभ्यते। उक्तञ्च ततः—

"भेकैः कोटरशायिभिर्मृतमिव क्ष्मान्तर्गतं कच्छपैः
पाठीनैः पृथुपङ्ककूटलुठितैर्यस्मिन् मुहुर्मूर्च्छितम्।
तस्मिन् शुष्कसरस्य कालजलदेनागत्य तच्चेष्टितं
येनाकण्ठनिमग्नवन्यकरिणां यूथैः पयः पीयते॥"

इत्येतत् पद्यम् आफ्रेड् महोदयेन कवेरकालजलदस्य कृतित्वेन स्वप्रकाशितशार्ङ्गधरपद्धतौ प्रख्याप्य तस्यार्थश्च कृतः। यथा :—
"कवेरकालजलदस्याविर्भावात् पूर्व्वं कवित्वसमुद्रः किल शुष्कतां गतः; इत्यर्थश्च श्लोकेनानेन व्यज्यते" इति—सूक्तिमुक्तावल्यामुदाहृतेन नव्यराजशेखरेण :—

"अकालजलदश्लोकैश्चित्रमात्मकृतैरिव।
जातः कादम्बरीरामो नाटके प्रवरः कविः॥" इति

कविना स्वयं कर्पूरमञ्जर्य्याः कथामुखे अपराजिताभिधेयस्य कस्यचित् कवेस्तत्कृतायाः मृगाङ्कलेखाभिधेयायाः कथायाश्च

नामोपस्थाप्य पारिपार्श्विकमुखेनैवात्मगौरवमुपस्थापितम् । यथा तस्य प्राकृतांशस्य छाया—

"सूत्रधारः—कः पुनस्तस्य कविः ?

पारिपार्श्विकः—भाव, कथ्यते—

तत् को भन्यते रजनीवल्लभशिखण्डः ।

रघुकुलचुड़ामणेर्महेन्द्रपालस्य कश्च गुरुः ॥

सूत्रधारः--[विचिन्त्य] प्रश्नोत्तरं खल्वेतत् [प्रकाशम्] राजशेखरः ।

पारिपार्श्विकः—स तस्य कविः ।

सूत्रधारः—तदात्मा किं न वर्णितस्तेन ?

पारिपार्श्विकः—शृणु वर्णित एव तत्कालकवीनां मध्ये मृगाङ्कलेखाकथाकारिणापराजितेन, यथा—

बालकविकविराजो निर्भयराजस्य तथोपाध्यायः ।

इत्यस्य परम्परया आत्मा माहात्म्यमारूढः ॥" इति

अस्यामपि नाटिकाप्रस्तावनायाम्—शृणु—

"किमपरमपरैः परोपकारव्यसननिधेर्गणितैर्गुणैरमूष्य ।

रघुकुलतिलको महेन्द्रपालः सकलकलानिलयः स यस्य शिष्यः ॥"

इति । महेन्द्रपालस्य खोष्टीयैकषष्ठ्यधिकसप्तशतशके [७६१] आविर्भावः समयः; सुतरां कवेरस्यापि स एव समय इति सर्व्वथा प्रतिपन्नोऽस्ति ।

अपि नाम यदेतस्या विद्धशालभञ्जिकानाम तया, विद्धा या शालभञ्जिका पुत्तलिका सैव नाम यस्यास्तथाभूता नाटिकेति व्युत्पत्तिलभ्या नाम । स्तम्भे शालभञ्जिकादर्शनेन इयमियमित्या-

दिना प्रथमाङ्के स्वप्नदृष्टा दोलान्दोलिनी कृतकन्दुकक्रीड़ा सैवैषा त्वया लक्षिता तव चित्तमाक्षिपतीत्यादिना द्वितीयाङ्कशेषे च निर्दिष्टा पुत्तलिकैव एतन्नाटिकाभिधानस्य प्रवृत्तिनिमित्तम्। तस्या आख्यानवस्तु तु त्रिलिङ्गाधिपतेर्व्विद्याधरमल्लस्य गूढप्रणयाभिव्यञ्जकघटनापारम्पर्य्यरूपम्। भूपतिरेकदा चित्रशालायां मृगाङ्कावल्यां विविधानि चित्राणि तथा दारुमयीं प्रतिमां विलोक्य तां लब्धुं यततिस्मेति प्रतिपाद्यो विषयः।

शृङ्गाररसात्मिकैव नाटिका, तत्र विधौ किल कवेर्व्वर्त्तते भूयसी रचनापरिपाटी, या हि प्रतिपदमेवादधाति काव्यरसरसिकानां शृङ्गारादिरसोन्मादनाम्। तथा च प्रथमत एव ग्रन्थसूचनायां कामदेवस्तुतिरूपमङ्गलं विदधता ग्रन्थस्य शृङ्गाररसप्रधानत्वमुपपादितं कविना। यथा—

"कुलगुरुरबलानां केलिदीक्षाप्रदाने
परमसुहृदनङ्गो रोहिणीवल्लभस्य।
अपि कुसुमपृषत्कैर्द्देवदेवस्य जेता
जयति सुरतलीला नाटिका-सूत्रधारः॥" इति

अत्र सुरतलीलादिपदेनैतन्नाटिकायाः प्रतिपाद्यप्रधानविषयस्य भङ्ग्या समुपवर्ण्यते, यथा सुरते स्त्रीपुंसयोर्म्मिलनरूपे या लीला शृङ्गारादिचेष्टा सा एव नाटिका, अभिनयात्मकसन्दर्भविशेषः, तस्याः सूत्रधारः सूचकः अनङ्गः जयति। एतेन त्रिलिङ्गाधिपस्य मृगाङ्कावलीलाभार्थं या या चेष्टा सैवोट्टङ्किता कौशलेन। परं द्वितीयपद्यं यत्—

"दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥"

इत्यनेन स्त्रियः प्रधान्यमत्रोपकल्पितम् ।

तृतीयश्लोकेन यत् 'गोनाशाय' इत्यारभ्य 'रक्षत्वद्रिसुता विवाहसमये प्रीता च भीता च वः' इत्युक्तं, तेन राज्ञा सह नायिकाया मृगाङ्कावल्याः पाणिग्रहणसूचनपरम् । अद्रिसुतायाः मृत्युञ्जयपतिलाभात् प्रीतित्वं तस्य संसर्गिपन्नगादिभ्यश्च भीतित्वं यथा स्वाभाविकं तथास्या अपि तादृशभूपतिपतिलाभात् हर्षम्, महिष्या गूहितत्वात् महिषीतः तथा विवाहप्रतिकूलघटनादिभ्यश्च भीतिः कारणम् । अपि च यत् "कन्दलदाए विमुक्कमअरन्दरसाए" इत्यादिवाक्यैः कुन्दलतायामनुरागं विन्यस्य राज्ञो नायिकायां दक्षिणनायकव्यवहारः सम्यक् सूचितः इति ।

परमत्र हरदासमुखेन "लाटेन्द्रचन्द्रवर्म्मा नरपतितिलकः" इत्यादिना सुतायां पुत्रत्वकल्पितस्य प्रतिभूत्वेन परिस्थापनमुक्तं तच्च नाटिकाया एतस्या वस्तुचमत्कारित्वं वक्तुमर्हामः । येनैषा एव नायिका घटनापारम्पर्य्येण राज्ञस्त्रिलिङ्गाधिपतेरङ्काधिगता परिकल्पिता कविना । अन्यच्च यत् केलिकैलासभवनभित्तिगात्रे राज्ञो महिष्यादीनाञ्च चित्राण्युपकल्प्य तत्र विदूषकस्य मुखेन स्वप्रियजनचक्षुषा कीदृशमेव प्रियमासक्तिमपि च कीदृशं स्वल्पेनैव वचसा सुशोभनमभिहितं कविना । तथा च "विदूषकः--[सक्रोधम्] णाहं लिहिदुं जाणिदो बह्मणी जाणादि जादिसो हं सा मं भणादि तुमं पच्चक्खको देवो त्ति [नाहं लिखितुं ज्ञातो ब्राह्मणी

जानाति यादृशोऽहं, सामां भणाति त्वं प्रत्यक्षदेव इति ]" इत्यत्र सामान्यव्यापारसंघटनमिषेण ब्राह्मण्यां ब्राह्मणस्य सुगभीरप्रेमास्पदत्वं व्यक्तीकृत्य संसारशिक्षणीये विषये किमु चरित्रबले च महतीमेव शिक्षां व्यपदिशति कविवरः।

एवं यत् "चक्षुर्मे चकमम्बुजं विजयते वक्त्रस्य मित्रः शशी" इत्यादिना मृगाङ्कावलीवर्णनमभिधायि तत्रभवता कविमुख्येन तच्चातिशयमानन्दरससम्विधायि श्रुतिसुखावहञ्च काव्यमध्ये तृणामभिनयदर्शनार्थिनाञ्च चेतसि सपदीति किं तत्र तर्कतल्पम्। एवमेवञ्च "सा दुग्धमुग्धमधुरच्छविरङ्गयष्टिः" इत्यादिना च तत्तदर्थमेव सातिशयं सुशोभनञ्च प्रतिपाद्यते प्रथमाङ्के पल्लवितेन।

द्वितीये च विदूषकचारायणस्य अलीकपरिणयं तथा दासबन्दुलेन सह नवोढावद्वाक्यालापं कुरङ्गिकां चेटीं प्रति तु तस्य क्रोधाभिव्यक्तिञ्च समुपकल्प्य परमानन्दमुपजनयति काव्याभिनयदर्शनार्थिनां चेतसि अतिमात्रम्।

एवमपि यदत्र विचक्षणां सुलक्षणाञ्च किङ्करीमुपस्थाप्य तयोर्मुखेन महामन्त्रिप्रभृतीनां राज्ञो मृगाङ्कावलीलाभे यद्यत् कौशलं या वा चेष्टा संवृत्तम्; तत् सर्वं प्रकटितं कविना; तथा हि "विचक्षणा—तदो तं परिणीअ महाराअसिरिविज्जाहरमल्लदेवेण महिअलचक्कवत्तिणा होदव्यम्" इत्यादिसन्दर्भेण। अपि च मेखलाविदूषकयोः यत् परस्परं विवादः, तस्य च भञ्जनम्; महिष्याश्च तेनासन्तुष्टिः, इत्यादिघटनापारम्पर्य्यैर्विचक्षणासहकृतायाः मृगाङ्कावल्याः राज्ञा सह यत् सम्मिलनं तच्च सन्तोषकर-

मभिनयार्थिनाम् । परं प्रबुद्धविदूषकस्य सुप्तां ब्राह्मणीं प्रति यद्-यदुक्तिः, ब्राह्मण्याश्च राज्ञो विवाहविषये स्वप्नसंलापः, तच्च सर्व्वं-थैव प्रमोदास्पदम्, नाट्यवस्तुपरिस्फुटने च महत एव कौशलस्य सुसमावेशः ।

एवं नाम भूपतेर्विवाहस्थानमुपगतानां किङ्करीणां परस्परं संलापेन राज्ञः परमलाम्पट्यं कामिजनानां चेतसो यत् स्वाभाविक-दौर्व्वल्यञ्च संभवति तत्सर्व्वमविस्तरेण तेषां व्यवहारतः प्रतिपत्तुमर्हामः । यथा :—"एका—हला, तरंगिए, कहिं उण महाराश्रो पेक्खिदव्वो [हला, तरङ्गिके, कुत्र पुनर्म्महाराजः प्रेक्षि-तव्यः । द्वितीया—सहि कुरंगिए, जहिं आसस्सविआहकोदूहल प्फुरिदो जणो दीसदि [सखि कुरङ्गिके, यत्रासन्नविवाहकौतूहल-प्रस्फुरितो जनो दृश्यते] अन्या—अयि विअक्खणि, किं विअ तरंगिआए मंतिदं जो सहस्साणं महिसीणं पाणिग्गही तस्स कितिश्र विश्र कोदूहलकलकलो [अयि विचक्षणि, किमिव तरङ्गि-कया मन्त्रितम् ? यः सहस्राणां महिषीणां पाणिग्राही, तस्य कियानिव कौतूहलकलकलः] अपरा—प्पिअसहि, विअक्खणि, किं णक्खु अणहिलासि कंदप्पचरिदाणं णवकोदूहली कामिजनो ? [प्रियसखि, विचक्षणि, किं नु खलु अनभिज्ञासि कन्दर्पचरितानां नवकौतूहली कामिजनः]" इति ।

अप्यहो ! चिरं मातुलाङ्गजायां मातुलपुत्रधिया भ्रान्तिमुद्-वोढाया महिष्या यत् कौतूकमिषेण तया सह भूपविवाहस्य संघटनमुपपादितं तच्च सुन्दरः वस्तूपन्यासः । परं तादृशविवाह-

स्योत्तरचरणे चन्द्रवर्म्मदूतमुखेनावगतार्थाया देव्याः भ्रमोपनोदनात्तात्त्विकविवाह एव सम्पन्नस्तदुविवाहः। यथा:—"देवी [जनान्तिकम्] पेक्ख देव्वदुल्ललिदाइं जं मए केलिकिलंतरेण अलीअं पड़िकप्पिदं तं सच्चत्तणेण परिणदं [विचिन्त्य] भोदु एव्वं दाव [प्रकाशम्] अज्जमादुलसंदेसमन्तरेण वि मए परिणामिदा एव्व एसा [प्रेक्ष दैवदुर्ललितानि, यन्मया केलिक्रीड़ितकेनालीकं परिकल्पितं तत् सत्यत्वेन परिणतम्। भवत्येवं तावत्। आर्य्यमातुलसन्देशमन्तरेणापि मया परिणायितैषा]" इति। अपरञ्च मन्त्रिभागुरायणवचनेन राज्ञे कुवलयमालायाः देव्यार्पणमतिशोभनम्। मृगाङ्कावल्या च कुवलयमालाया सपत्नीत्वेन परिग्रहणं महत्वपरिचायकम्। यथा:—"मृगाङ्कावली—एहि कुवलअमाले, परिरम्भस्स मं कलत्तं भविअ सवत्ती संवुत्तासि [एहि कुवलयमाले, परिरम्भस्व मां कलत्रं भूत्वा सपत्नी संवृत्तासि]" इति।

एषातिशोभना वाणी नारीणामितोऽन्यत् किमपि महत्वं कर्त्तव्यं वक्तव्यञ्च विद्यते स्वपत्नीं स्वामिनञ्च प्रतीषत्करमत्र जगति। काव्येऽस्मिन् प्रथमतः समाप्तिं यावत् देव्या यत्र यत्र समागमः अस्माभिरवलोक्यते, तत्र तत्रैव तस्याः वृथामोदप्रियता, ततश्च पराभव एव संलभ्यते। एवं "प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः" इत्याद्यलङ्कारोक्तेः राज्ञः वहुस्त्रीजनसत्वेऽपि नवीनां प्रति निरतिशयामासक्तिमवलोक्य तस्य सातिशयं चित्तदौर्वल्यमेव सर्व्वतः प्रतिभाति। भागुरायणादीनाममात्यानां तत्र गूढभावेन साहाय्यन्तु कविना प्रतिपादितम्। तत् शोभन-

कल्प—१२

मशोभनं वा नास्माकं विचारसहम्। परं नाटिकालक्षणेन लक्षितस्य नर्म्मसचिवस्य नूनमोषद्वियत्व प्रतिपाद्य वाढमेव पुष्कलत्वं नीतं ग्रन्थस्येति किं बहुपरिजल्पितेन।

**संक्षिप्तेतिवृत्तम् :**—प्रथमाङ्कः—प्रस्तावनान्ते मन्त्रिशिष्यहरदासस्य प्रवेशः; तेन मन्त्रिबुद्धेः प्रशंसा, एवं लाटपतिना चन्द्रवर्म्मणा दुहितरि पुत्रत्वख्यापनस्य तथा मन्त्रिणा कौशलेन राज्ञः प्रतिभूत्वव्यपदेशेन तस्याः राजधान्यामानयनमित्यादिवृत्तान्तस्य च कीर्त्तनम्। नेपथ्ये प्रभातस्य तथा राज्ञः प्रबुद्धत्वस्य च ज्ञापनम्। हरदासेन, मन्त्रिणा च राज्ञः सप्नार्थं यत् सुरङ्गायितगृहं निर्म्मितं तदर्थमेव प्रत्यूषसि नृपस्य निद्राभङ्ग इति कीर्त्तनम् तादृशगृहनिर्म्माणकारिभ्यः मन्त्रिनिर्देशेन पारितोषिकदानार्थं महाभाण्डारागारं यास्यामीति निवेदनम्, प्रस्थानञ्च। स्वप्नायितेन राज्ञा सह विदूषकस्य आलापः। तेन राज्ञः कुवलयमालालाभे आरब्धयत्नस्य आख्यानम्, किन्तु स्वप्नदृष्टायाः लाभार्थमेव भूपतिना स्वव्याकुलतायाः प्रकाशणम्। गुप्तद्वारेण तयोः मकरन्दोद्याने प्रवेशः। नेपथ्ये बन्दिभिः पुष्पसमयसमागमस्य घोषणम्। भूपविदूषकाभ्यां वसन्तश्रियः परिदर्शनम्, वर्णनञ्च। विदूषकस्योक्त्या राज्ञोः स्फटिकशिलानिर्म्मितकेलिकैलासभवनगमनोपक्रमे वकपङ्क्तिरवाः मधुरशब्दवत् शब्दस्याकर्णनं। तन्निर्णयोपक्रमे दोलान्दोलितायाः स्वप्नदृष्टावदनुमानम्, केलिकैलासभवनगमनञ्च। तत्र भित्तिगात्रे बहुचित्राणां मध्ये स्वप्नदृष्टायाः चित्रस्य दर्शनम्। विदूषकेण स्तम्भे पुत्तलिकायाः दर्शनम्। राज्ञा सैव स्वप्नदृष्टायाः प्रति-

कृतिरितिस्थिरीकरणम्। तत्फले राज्ञा स्वप्नलब्धस्य हारस्य प्रत्यर्पणम्; कैलासभवनस्य पश्चादुभयोः गमनम्। तत्र विदूषकेण देवीभवनं प्रति पदचिह्नस्य अवलोकनम्। तस्मिन्नेव क्षणे नेपथ्ये मध्याह्नकालोपस्थितेरुद्घोषणम्। विदूषकेण देवीगृहं गत्वा तया किं क्रियते इति पर्य्यवेक्षणाय औत्सुक्यस्य प्रकटणम्। राजविदूषकयोः प्रस्थानञ्च।

द्वितीयाङ्कः—कुरङ्गिकातरङ्गिकयोर्द्वयोः प्रवेशः। तयोः परस्परं संलापः। कथाप्रसङ्गेन तरङ्गिकया कुन्तलाधिपतिचण्डमहासेनस्य कुवलयमालां नर्म्मदास्नानानन्तरं राज्ञो दृष्टतया महिषी स्वमातुलपुत्रेण मृगाङ्कवर्म्मणा सह तां परिणाययितुमभिलषति, तदुद्योगाय अहं गच्छामीति कथनम्। कुरङ्गिकया च देवी विदूषकस्यालीकविवाहसंघटनं कृत्वा प्रमोदं करिष्यतीति उक्त्वा तदर्थमेवाहं यामीति कथनम्। तयोः प्रस्थानम्। ततः सोत्कण्ठितस्य राज्ञः विवाहवेशभूषितस्य विदूषकस्य च प्रवेशः। तयोः तुषारपुञ्जनामककदलीगृहे प्रवेशः। देवीप्रेरितदास्यास्तत्र समागमः। तया विदूषकस्य विवाहे वरयात्रिकार्थं राज्ञो निमन्त्रणस्य ज्ञापनम्। देवीपरिजनादिभिः सह वधूवेशेन वन्दुलनामकदासस्य प्रवेशः। देव्या तयोर्वैवाहिकक्रियायाः सम्पादनम्। तेन विदूषकस्य क्रोधः तस्मात् प्रस्थानञ्च। ततो राज्ञा कर्पूरद्वीपादागतेन विषवैद्येन माधवीलतामण्डपं माञ्जिष्ठ्यपुष्पगुच्छेनालङ्कृतम्, तद्दर्शनाय प्रियवयस्यसान्त्वनार्थञ्चाहं यामि; त्वञ्च तदवलोकनाय सन्ध्यायां गमिष्यसीति निमन्त्रणम्। कुरङ्गिकां

विहाय परिजनेन सह देव्याः प्रस्थानम्। कुरङ्गिकया परिक्रम्य नवमालिकागुल्मान्तरितस्य विदूषकस्यावलोकनम्, राजनिर्देशि-तया तया विदूषकेण वस्त्राञ्चलस्य आकर्षणम्। तेन विदूषकस्य क्रोधः। राजवचनेन देव्यन्तिके कुरङ्गिकायाः प्रस्थानम्। मन्त्रि-निर्म्मितनवचतुःशालगृहे राज्ञः स्वप्नदृष्टायाः राजविदूषकाभ्यां दर्शनम्। तस्याः अवलोकनार्थं तयोः सोपानावतरणम् अदर्श-नञ्च। राज्ञा समन्तादवलोक्य चरणालक्तरञ्जितभूमिः कुन्तलच्युत-मालायाः अन्योन्याभरणानाञ्च विलोकनम्। नेपथ्यात् विरहिणीं सखीं वोद्दिश्य सख्या तत्प्रकटनाय अनुरोधः। राज्ञो विदूषकस्य च तदाकर्णनम्। विदूषकेण स्वप्नदृष्टाया एव दोलान्दोलनं स्तम्भे पुत्तलिकारूपेणावलोकनं कन्दूकक्रीड़ारतञ्चेति राज्ञे निवेदनम्। नेपथ्यात् सख्या राज्ञे विरहिण्याः अवस्थां निवेदितुं स्वरचितस्य श्लोकद्वयस्य पाठः। राजविदूषकयोश्चतुःशालगृहादवतरणम्। नेपथ्यात् सायन्तनीयसमयस्य वर्णनम्। राजविदूषकयोः सन्ध्यो-पासनार्थं देवीगृहं प्रति गमनम्।

तृतीयाङ्कः—विचक्षणासुलक्षणयोः दास्योः प्रवेशः। तयोः परस्परं संलापे विचक्षणया उक्तम् अयमेव मृगाङ्कवर्म्मा मृगाङ्का-वली, इमामुद्वाह्य राजा राजचक्रवर्त्ती भविष्यति; अतएव मन्त्रि-णाहमुक्ता यत्त्वया कृतभवनभित्तिगर्भसञ्चारे वासगृहे मृगाङ्का-वली राज्ञे दर्शयितव्या येन तस्य स्वप्नापगमो भवति। ततोऽहं मन्त्रिवाक्यपालनार्थिनी मृगाङ्कावलीं ब्रवीमि सखि, गृहेऽस्मिन् कामदेवोऽवतरति तं दृष्ट्वा कण्ठाकृष्टेन हारकुसुमदाम्ना त्वया

अर्चयितव्यः, येन ते एतादृशः पतिः भवति, तयापि तथाभ्युपगतं कृतस्य, पुनर्हिन्दोलायां दर्शिता, केलिकैलाशभवने सुस्थितस्फटिक-भित्तिषु आत्मनश्चित्रं लेखित्वा स्तम्भगर्भसञ्चारिणा तत्तत्भणायिता श्लोकपाठिता चेति। सुलक्षणया च अलीकाशरीरिणीवाचा प्रतारितायाः मेखलायाः जीवनरक्षार्थं गन्धर्व्वविद्याविशारदब्राह्मणस्य विदूषकस्य पूजनरूपं प्रतीकारमन्वेष्टुं देव्यादेशेन प्रवृत्तास्मीति कथनम्। तयोः प्रस्थानञ्चेति प्रवेशकः। उत्कण्ठितचेतसो राज्ञः स्नानशुचिस्वतो विदूषकस्य च प्रवेशः। राज्ञा विरहवचनस्य विन्यासः; विदूषकेण देवीसन्मुखे तद् धात्रीकन्यामेखलादास्याः जीवनायानुष्ठानस्य कीर्त्तनम्। परिजनैः सह देव्याः प्रवेशः। मेखलया विदूषकपदद्वयस्य स्वमस्तके स्थापनम्। तस्याः विदूषकस्य पादयोरन्तरे प्रवेशनम्। तद्धेतुना विदूषकेण आनन्दस्य प्रकटनम्। तस्माच्च अप्रतिभायाः मेखलायाः रोदनम्। तेन देव्याः भूपं प्रति विदूषकस्य च देवीं प्रति सोल्लोण्ठनोक्तिः। कुपितायाः देव्याः परिजनैः सह निष्क्रमणम्। नेपथ्ये चन्द्रोदयवर्णनम्। राज्ञो विरहः। विचक्षणया सह मृगाङ्कावल्याः प्रवेशः। तयोर्व्वाक्यश्रवणार्थं राजविदूषकयोः कदलीलतान्तरिते गमनम्। मृगाङ्कावल्या विरहस्य विज्ञप्तिः। विचक्षणामृगाङ्कावल्योः माधवीलता-मण्डपे गमनम्। तत्र राजविदूषकयोरुपस्थितिः। मृगाङ्कावल्या ससाध्वसं सस्पृहं राज्ञो विलोकनञ्च। नायिकानायकयोः संलापः। राज्ञा स्वकण्ठात् हारमुन्मोच्य मृगाङ्कावलीकण्ठे अर्पणम्। नेपथ्यात् देवी सिद्धनरेन्द्रदत्तौषधसंस्थितमाञ्जिष्ठस्तवकसहस्रालंकृतं माध-

दोलतामण्डपं द्रष्टुमागतेति घोषणम्। तेन विचक्षणया विदूषकेण च परस्परं विच्छेदार्थं नायिकायाः नायकस्य च सतर्कीकरणम्। तेषां निष्क्रमणञ्च।

चतुर्थाङ्कः—नेपथ्ये प्रभातस्य वर्णनम्। जागरितविदूषकस्य सुप्ताया ब्राह्मण्याश्च प्रवेशः। ब्राह्मण्याश्च राजविवाहविषये स्वप्न-प्रलापः। विदूषकेण तस्याः जागरणम्। विदूषकस्य राजान्तिके, ब्राह्मण्याश्च महिषीसमीपे गमनम्। राजविदूषकयोः प्रवेशः। नेपथ्ये नायिकादोलाविहारस्य सूचनम्। मदनातुरेण राज्ञा दोलाविहारस्यावलोकनं विदूषकं प्रति वचनञ्च। विदूषकेण विचक्षणावचनात् ज्ञायते—पाणिपीड़नपूर्वं ते दापितो देव्या इति प्रतिवचनम्। राज्ञस्तत्र निरासवचनम्। पेटिकाहस्तानां दासीनां प्रवेशः। विदूषकेण सह तासां रहस्योक्तिः। विदूषकेण दण्डकाष्ठोत्तोलनेन दासीनां प्रहारस्योद्योगः। राज्ञा दासीप्रदत्तस्य विवाहनेपथ्यस्य धारणम्। दासीनां नृत्यं तदन्तर्गच्छतो विदूषकस्य च नर्त्तनम्। देव्याः वधूवेशमृगाङ्कावल्याः कुवलयमालायाश्च प्रवेशः। देव्यादेशेन राज्ञा वैवाहिकक्रियायाः निष्पादनम्। प्रविष्टप्रतीहारिणा "देव, देवीमातुलस्य चन्द्रवर्म्मणः प्रधानदूतेन सह आर्य्य-भागुरायणो द्वारि तिष्ठति"इति निवेदनम्। देवीनिदेशेन तयोस्तत्रानयनम्। तैः परस्परं कुशलप्रश्नस्य विज्ञप्तिः। ततो दूतेन देवीमातुलपुत्रजननस्य परं मातुलेन मृगाङ्कावल्यां पुत्रत्वप्रचारस्य, मृगाङ्कावल्याः यस्माच्च योग्यपात्रे समर्पणं भवितुमर्हति तद्रूपोदन्तस्य च निवेदनम्। विदूषकेण तादृशपात्रे राजनि सा अर्पितैव

इत्य्‌द्घोषणम्‌। तेन सर्व्वेषां विस्मयः। अलीकव्यापारस्य सत्वत्वे परिणतिमविद्य देव्याश्चापि विस्मयः। मन्त्रिवाक्येन कुवलयमलायाश्चापि देव्या राज्ञे समर्पणम्‌। प्रतीहारेण कुरङ्गकागमनस्य ज्ञापनम्‌। तस्य प्रवेशः। तेन पत्रस्य प्रदानम्‌। मन्त्रिणा भागुरायणेन तस्य पाठः। वाचितार्थस्तु सेनापतेः सर्व्वत्र विजयः। भरतवाक्यम्‌।

**नायकादिसिद्धान्तः**—नायकश्चात्र त्रिलिङ्गाधिपतिर्व्विद्याधरमल्लः धीरललितः, नायिका लाटाधिपतेश्चन्द्रवर्म्मणो दुहिता मृगाङ्कावली, कुन्तलाधिपस्य कुमारी मृगाङ्कावली च मध्या प्रारूढयौवना, कृताभिषेका महिषी स्वकीयाचालम्बनविभावाः। वसन्तचन्द्रचन्दनादयः उद्दीपनविभावाः; परस्परसंवादाच्चिविक्षेपादयश्चानुभावाः; आवेगौत्सुक्यादयो व्यभिचारिणः रतिः स्थायी, सम्भोगशृङ्गाररसोऽङ्गी, हास्यविप्रलम्भादयोऽङ्गरसाः, मन्त्रिविदूषकादयः सहायाः, रीतिः पाञ्चाली, गुणो माधुर्य्याख्यः; प्रस्तावना प्रयोगातिशयरूपा इति।

—०००(*)०००—

## भट्टिकाव्यसमालोचनम्—

सन्ति तावत्‌ यावन्ति महाकाव्यानि तेषु भट्टिकाव्यम्‌ उत रावणबधाख्यमपरं नाम महाकाव्यं विशेषेणोल्लेखयोग्यम्‌। प्रथमतोऽस्य कवयितुर्नामनिश्चये वर्त्तते च महत्येव विप्रतिपत्तिः सभ्यानाम्‌। केऽपि भट्टि, भट्टो, भट्टपादा इति, तथान्ये स्वामिभट्टो

भर्त्तृहरिरिति च नाम्ना विशेषयन्ति। पदवाक्यप्रमाणपारावारीणेन नारायणभट्टेन तस्य भट्टिबोधिनीटीकायां कवयिता भर्त्तृहरिरिति नाम्नाभिहितः। विद्याविनोदाचार्य्येण तथैवाङ्गीकृतम्। वैजयन्तीटीकायां कन्दर्पचक्रवर्त्तिना तथा मुग्धबोधिनीटीकानिर्म्माता भरतमल्लिकेनापि उल्लिखिते एवास्मिन् नाम्नि स्वमतमवतारितम्। सूरिणा मल्लिनाथेन स्वरचितायां सर्व्वपथिनाख्यायां टीकायां कवेस्तथैव नाम प्रतिपादितम्। जयमङ्गलस्यापि मल्लिनाथमत एवानुप्रवेशोऽस्माभिः परिलक्ष्यते। नितरां भट्टिकाव्यनिर्म्मातुः भर्त्तृहरिरिति नाम निःसंशयमेवानुमितुं शक्यते।

एवमपि च प्रत्याययन्ति पुरातत्त्वविशेषज्ञाः, यथा रामनाथयदुनाथ इति नाम्नः रामो यदुरिति संक्षेपेण लोकव्यवहारोऽस्माभिरुपलभ्यते। तथा भर्त्तृहरिरित्यखण्डनाम्नः 'भर्त्तृ' इति तात्कालिकलौकिकाख्यानं सम्भवतितराम्। ततः क्रमेण 'भर्त्तृ' इति संस्कृतनामांशस्य प्राकृते परिणतिमित्य भट्टिरिति नाम संवृत्तम्। यथा 'भर्त्ता' इत्यस्य प्राकृते भट्टेति। वयमत्रोदासीनाः प्राचीनतत्त्वसंग्रहीतार एव प्रमाणम्।

केचन विद्वांसः विक्रमार्कस्य भिन्नोदरत्वेन प्रथितयशसो वैराग्यशतकादिदिव्यभावपूर्णग्रन्थप्रणेतुर्भर्त्तृहरेः कर्त्तृत्वमस्मिन्नारोपयन्ति, किन्तु तन्न समीचीनं वक्तुमुत्सहामहे, यतो ग्रन्थस्यास्य अन्तिमश्लोकात् कवयितुः परदेशवासित्वं परान्नभोजित्वञ्च स्फुटत एव प्रतिभाति। तथाविधराजचक्रवर्त्तिनः सोदरस्य परदेशवासित्वं परान्नजीवित्वञ्च सर्व्वथैवानुपयुक्तमेवास्माकं हृद-

यम्। तथा च—

"काव्यमिदं विहितं मया वलभ्यां
श्रीधरसूनु-[सेन-] नरेन्द्रपालितायाम्।
कीर्त्तिरतोभवतान्नृपस्य तस्य
क्षेमकरः क्षितिपो यतः प्रजानाम्॥" इति

अपरस्य श्रीधरसूनोर्भर्त्तृहरेः सम्बन्धिनी वर्त्तते काचित् किंवदन्ती, सम्भवति स एवैतद्ग्रन्थप्रणेता भर्त्तृहरिरिति सहृदयानां मतम्। तथा च जनप्रवादः,—श्रीधरपत्नी प्रसववेदनया दंदह्यमाना बालं भर्त्तृहरिं प्रसूय पञ्चत्वमाससाद। तेन श्रीधरस्वामी परमनिर्व्वेदमासाद्य संसारस्यासारतामनुभूय सन्यासमार्गमुपस्थातुमुपचक्रमे, किन्तु जातवैराग्योऽपि अपत्यस्नेहरससंसिक्तहृदयो जनकस्तथाविधं सद्योजातबालं त्यक्तुं सर्व्वथैव नाशकदिति श्रीधरः समन्तात् सङ्कल्पबाधां समीक्ष्य पर्य्याकुलोऽभूत्। दैवगत्या अत्रान्तरे तस्य उटजोपरिष्टात् गृहोलिकाण्डमेकं भूमौ पतित्वा विदीर्णं संवृत्तम्। तस्माच्च क्षुद्रो ज्येष्ठोग्निशुर्व्वहिरागत्य दूरस्थां मक्षिकामेकां संगृह्य स्वोदरपूर्त्तिं चकार। तत् समीक्ष्य श्रीधरस्य सहसैव इदं दिव्यज्ञानमभवत् यत्—'आहारोऽपि मनुष्याणां जन्मना सह जायते' इत्यालोच्य बालकं प्रत्याह—

"अयि मदङ्गजार्भक! कुलवल्लीसूतावशिष्टकोरक!! —

येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः।
मयूराश्चित्रिता येन स ते वृत्तिं विधास्यति॥" इति

बालं विहाय गृहतो बहिरगात्।

समनन्तरञ्च वलभीपतिः श्रीधरसेनो लोकपरम्परया विदितवृत्तः सद्योजातं बालमानीय कस्यै चित् धात्र्यै समर्पयत्। ततश्च समतीते बहुदिवसे स एव पितृत्यक्तो बालो भर्त्तृहरिरिति नाम्ना विदूषामग्रणीः समभवत्। अनन्तरञ्च तस्य गुणविमुग्धो वलभीपतिः आत्मजानां शिक्षार्थं तमेव सुरगुरुकल्पं भर्त्तृहरिं निर्दिश्य तान् समर्पितवान्। ततश्चैकदा व्याकरणमध्यापयति भर्त्तृहरौ तं छात्रानपि अन्तरा हेलया गच्छन्तं कमपि कुञ्जरशिशुं समवलोक्य अन्तेवासिनो राजपुत्राः वेदाङ्गव्याकरणस्य वर्षमेकं पाठवाधां परिगणय्य नितान्तोद्विग्नाः बभूवुः।

अथ तेषामनध्यायवर्षेऽपि येन शब्दशास्त्रपाठफलं भवेत् तदुपयुक्तं व्याकरणबहुसूत्रस्मारकमपूर्व्वं महाकाव्यमिदं विरच्य राजपुत्राणां व्याकरणपाठफलमनायीति व्याकरणात्मकस्य काव्यस्य प्रणयने बीजम्। एवंविधं प्रवादवाक्यं यद्यपि च साकल्येन न विश्वसनीयं तथापि वक्तुमुत्सहामहे, यत् 'नह्यमूलाजनश्रुतिः' इति शिष्टवाक्यात्, प्रवादवाक्यस्यांशविशेषे यत्र कुत्राप्यस्ति घटनायाः मूलमिति, यातु प्रवादवादः, न समुपलभामहे भौमककविविरचितं रावणार्ज्जुनीयं नाम महाकाव्यमृते एवंविधं व्याकरणानुशासनप्रपञ्चकं काव्यमस्त्यत्र जगति।

कृतं तदालोचनया, बहुप्रामाणिकानां ग्रन्थानां सन्दर्भेषु भट्टिरित्यभिधानमेवास्माभिरुपलभ्यते, नितरां रावणवधकाव्यनिर्म्मातुर्भर्त्तृहरेरपराख्यानं भट्टिरिति कल्पनं नासङ्गतमेव। यथा च भारविकृतकिरातार्ज्जुनीयकाव्यस्य भारविः, माघनिर्म्मितशिशु-

पालबधस्य च भाव इति नाम, तथास्य कवयितुरिति विनिर्द्देशे न क्वापि हानिरपि वा दोष इति, तथा च महाकाव्यलक्षणे 'कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा' इत्युक्तेः कविनामानुसारेणापि महाकाव्यस्य नामकरणं नासङ्गतमेव।

कविसमयस्तु प्राचीनतत्त्वसंग्रहीतृभिः एवमेवाभिहितत्, यत् ख्रीष्टीयषष्ठशताब्द्याः शेषभागे राज्ञः श्रीधरसेनस्योत्पत्तिकालः, तस्य सभासदः कवयितुरपि प्रादुर्भावः स एव समय इति।

एतदेव काव्यं रामायणीकथामवलम्ब्य श्रीरामचन्द्रस्य चरित्रवर्णनमिषेण गुरुकठोरमपि शब्दानुशासनं शास्त्रं सरसायते अनन्यगुणसम्पन्नः कविवरः। अपि च कण्ठस्थकरणाय यान्यपि दुःखावहानि व्याकरणानुशासनानि तानि च सुमधुरकवितारचनया शिशोः प्रथमोच्चरिता वागिव प्रीणयति श्रवणयुग्मम्। तथा श्लोकोपनिबन्धनेन पाणिनीयसूत्रप्रपञ्चनमेवास्य विरचने कवेरुद्देश्यमिति विभाव्योदाहरणकाव्यमिति नाम्नैव निरदिशत् श्रीमन्महामहोपाध्यायः कोलाचलः सूरिसत्तमो मल्लिनाथः।

काव्यस्येतस्य तावत् प्रथमतः प्रकीर्णकाण्डं, अधिकारकाण्डं, प्रसन्नकाण्डम्, तिङन्तकाण्डञ्चेति चतुर्धा विभज्य संपूर्णं नीतं तत्रभवता निखिलशास्त्रार्थकुशलिना भट्टिकविना। तेषु च व्यामिश्ररूपं सामान्यविशेषकार्य्यप्रदर्शकं तिङन्तकाण्डमादित आपञ्चमसर्गम्, तथा पाणिनीयाष्टकान्तर्गताधिकारसूत्रानुसारतः षत्वणत्वगुणवृद्ध्यागमपरिव्यापकमधिकारकाण्डं चतुःसर्गव्यापि षष्ठसर्गात् नवमसर्गं यावत्। गुणालङ्कारसमलङ्कृतं

प्रसन्नकाण्डं सर्गचतुष्टयात्मकं दशमात् त्रयोदशसर्गपर्य्यन्तम्, लट्प्रकरणादि नवलकाररूपप्रदर्शकस्य तिङन्तकाण्डस्याधिकारस्तावत् चतुर्द्दशसर्गतो द्वाविंशतिसर्गान्तम्।

काव्येऽस्मिन् शुद्धव्याकरणोदाहरणतया स्थानेषु श्रुतिकठोरमपि पदं समुपन्यसितुं समीहते कविकुलविभाकरः श्रीमान् भट्टिनामा। न चेत् काव्यजगति ये खलु आप्यायन्ते प्रथितयशसः दिगन्तोद्भाषितारः काव्यसुधाधारया श्रवणमूलं, तेभ्यः कवयितुः स्थानं न निम्नस्तरेऽभवत्। एतदेव काव्यं यद्यपि कवित्वसौन्दर्य्यविकाशाय पदकदम्बं समुपादधत्, तर्हि कालिदासादिकवयितॄणां सन्दर्भेभ्यो निम्नासनं नाध्यकरिष्यत्।

अत्र तावत् वंशहवर्णन-प्रभातवर्णनादिषु बहुषु स्थलेषु अनन्यसुलभान् कविगुणान् बाहुल्येन समुपलभामहे। एतदुपयोगमाश्रित्य कविना स्वयमुक्तम्,—

"दीपतुल्यप्रबन्धोऽयं शब्दलक्षणचक्षुषाम्।
हस्तामर्ष इवान्धानां भवेत् व्याकरणादृते॥" इति,

वस्तुतः व्याकरणशिक्षाविषये काव्यमेतद्यथा उपयोगमर्हति, तथाविधं पर्य्याप्तशिक्षणीयं सारस्वतभाण्डारे द्वितीयं नास्तीति कृतं बहुभाषणेन।

**संक्षिप्तेतिवृत्तम्** :—प्रथमसर्गे—राज्ञः दशरथस्य गुणादिवर्णनम्, सन्तानहीनतया तेन पुत्रेष्टिकरणाय ऋषेः ऋष्यशृङ्गस्यानयनम्। अथ तेनानुष्ठितायां पुत्रेष्टौ हुतोच्छिष्टभक्षणेन कौशल्यायां रामस्य, कैकय्यां भरतस्य सुमित्रायां यमजयोर्लक्ष्मण-

भव ष्नयोश्च चतुर्णां पुत्राणां जन्म। तेषां दशरथेन जातकर्म्मादि समापनं, रामादीनां निखिलशस्त्रशास्त्रविद्याशिक्षणं, ऋषिणा विश्वामित्रेण दशरथाय रामलक्ष्मणयोः प्रार्थना, पुत्रविरहदुःखमसहिष्णुणापि ऋषिशापभयेन दशरथेन तयोरर्पणम्, रामलक्ष्मणयोः ऋषिमनुगमनम्।

द्वितीये—विश्वामित्रानुगच्छतोः रामलक्ष्मणयोः पथि शरदादि ऋतुसम्पदृर्शनं, ततः रामलक्ष्मणाभ्यां विश्वामित्रतः जयाविजययोः विद्ययोः प्राप्तिः, रामेण तारकानिधनं, तापसयज्ञविघ्नकारिणां मारीचादिनिशाचराणां दूरीकरणेन आश्रमपदस्य निर्व्विघ्नीकरणं, विश्वामित्रेण रामलक्ष्मणयोः जनकयज्ञभूमिप्रापणं, तत्र रामेण हरधनुर्भञ्जनं, दशरथस्य मिथिलागमनं जनकेन रामादिचतुर्भ्यः कुमारेभ्यः सीतोर्म्मिलादिकन्याचतुष्टयस्य दानं, ततः कृतविवाहानां रामादीनां अयोध्यां प्रति गमनमार्गे हरधनुर्भङ्गजातामर्षेण जामदग्न्येन युद्धाय रामस्य आह्वानं, गणितप्रमादेन दशरथेन परशुरामस्य स्तुतिः, तथाप्यनपनीतोद्धतभावस्य परशुरामस्य रामेण धनुषः तेजसश्च समाकर्षणं, रामेण परशुरामस्य तेन धनुषा स्वर्गपथावरोधनं, रामादीनामयोध्यागमनञ्च।

तृतीये—निष्ठिततनयविवाहमहोत्सवस्य दशरथस्य रामाभिषेकार्थं तत्कार्य्यकुशलाननुचरान् नियोगविज्ञतमान् पुरुषान् प्रति निदेशः, तैश्च सपादपीठमणिरत्नादिखचितसिंहासनस्य रचनम् तीर्थसलिलादिद्रव्याणामप्यानयनं च। मन्थरामन्त्रणप्रणोदितया कैकेय्या दशरथाय रामस्य वनगमनं, भरतस्य राज्याभिषेचनमिति

वरद्वयस्य प्रार्थना, सत्यभङ्गभयेन राज्ञा रामस्य वनप्रेषणं, सीता-लक्ष्मणाभ्यां रामानुगमनञ्च, तद्विरहेण राज्ञो मरणं, मातुलालयादागतेन भरतेन मातुः कैकेय्याः भर्त्सनम्। राज्ञश्चान्त्येष्टिसम्पादनम्, राममानेतुं वनगमनं, विनयेनाप्यनागतस्य रामस्य पादुकां सिंहासने संस्थाप्य प्रजायाः अनुपालनम्।

चतुर्थे—भरते प्रतिनिवृत्ते लक्ष्मणेन सीतया च सह रामस्य अत्रेस्तपोवनगमनम्; तत्रत्यैर्मुनिभिः कृतसत्कारस्य रामस्य दण्डकारण्यगमनं, तत्र रामेण विराधाभिधेयस्य निशाचरस्य हननं ततो रामस्य शरभङ्गाश्रमगमनं, मुनेः शरभङ्गस्य प्रज्वलितहुतवहे आत्मदानं, ततः सुतीक्ष्णाश्रमपदं गत्वा रामस्य पर्णकुटीरनिवासः, तत्र ब्राह्मणानञ्च यतस्तस्य विविधकार्य्यालोचनया कियत् कालातिक्रमणं, ततश्च (सू)शूर्पणखया रामसमीपे आगमनं, तया कृतदारं रामं विज्ञाय लक्ष्मणान्ते गमनं, लक्ष्मणेन तस्याः पुनः रामसमीपप्रेषणं, रामेणापि च भूयस्तस्याः लक्ष्मणान्तिके प्रेरणं, लक्ष्मणेन तस्या नाशाकर्णयोः च्छेदनं, सूर्पणखया रावणादीनां बलस्पर्धनं, जन्मान्तरे एतत् फलं प्राप्स्यसीति तर्ज्जनञ्च रामलक्ष्मणाभ्यां खरदूषणयोः चतुर्द्दशसहस्रसंख्यकैः निशाचरसैन्यैः सह समरावतरणं, तद्युद्धे रामेण त्रिशिरसो निशाचरस्य मस्तकत्रयकृन्तनं पर्वतमिव निपतितं त्रिशिरसं दृष्ट्वावशिष्टानां भीतिः।

पञ्चमे—रामलक्ष्मणाभ्यां खरदूषणयोः निधनम्, सूर्पणखया रावणाय खरदूषणवधवृत्तान्तस्य कथनं, सीतायाः रूपवर्णनञ्च, तदुत्तरे रावणेन सूर्पणखायाः समाश्वासनं, मारीचसमीपगमनञ्च,

मारीचेन रावणायोपदेशः, रावणेन मारीचस्य भर्त्सनं, मारीचेन मायामृगरूपधारणं, रामेण सीतावाक्यात् मायामृगानुगमनं, मायामृगहननञ्च; मायामृगस्य गुरुगम्भीरशब्दभीतया सीतया लक्ष्मणस्य रामान्तिके प्रेषणं, रावणेन सीतारूपप्रशंसा, सीतया रावणाय रामगुणकीर्त्तनं, रावणेन रामनिन्दा, सीताप्रलोभनं, सीताहरणञ्च, जटायुषा विमानपथे रावणभर्त्सनं, तेन सह युद्धावतरणं, रावणेन जटायुषः पक्षकर्त्तनं, छिन्नपक्षस्य तस्य भूमौ पतनञ्च ।

षष्ठे—रामेण लक्ष्मणं प्रति सीतायाः कुशलप्रश्नः, सीतार्थं परिदेवनं, जटायुषः सन्दर्शनञ्च, तस्माच्च रामस्य सीताहरणवृत्तान्तावगतिः, जटायुषो मृतुः, रामलक्ष्मणाभ्यां तस्य अग्निसत्कारः, उदकाञ्जलिदानञ्च, रामलक्ष्मणाभ्यां कबन्धस्य बाहुकर्त्तनं, रामस्य कबन्धाय प्रश्नः, तदुत्तरे कबन्धस्य आत्मवृत्तान्तकथनं, सुग्रीवेण सह सख्यं कर्त्तुं रामाय उपदेशदानं, कबन्धस्य स्वर्गप्राप्तिः, रामलक्ष्मणयोः शबरीसमीपगमनं, शबरीस्वरूपस्य कीर्त्तनं, तां प्रति कुशलप्रश्नश्च, शबर्य्या रामलक्ष्मणयोः मधुपर्कादिरर्च्चना, ताभ्यां स्वमङ्गलाख्यापनं; शबर्य्यास्तिरोधानं, रामलक्ष्मणयोः पम्पायां वासः, तस्याः स्वरूपवर्णनं, रामलक्ष्मणयोः ऋष्यमुखाद्रिगमनं, तयोः समीपे सुग्रीवेण हनूमतः प्रेषणं, मारुतेः भिक्षुकवेशेन रामलक्ष्मणयोः समीपागमनं, तेन ऋष्यमुखगिरेः दुर्गमत्वादिस्वरूपस्य वर्णनं, रामलक्ष्मणाभ्यां स्वपरिचयस्य श्रवणञ्च, तेन सुग्रीवस्य सौख्यप्रार्थना च, रामस्य सुग्रीवेण सह

सौख्यं सुग्रीवेण रामसमीपे कपिराजवालिपराक्रमस्य ख्यापनं, वालिसुग्रीवयोः द्वन्द्वयुद्धे वालितः सुग्रीवस्य पराभवः, रामेण सुग्रीवस्य माल्येन चिह्नीकरणं, पुनस्तयोः द्वन्द्वयुद्धावतरणं, रामशरेण वालेः पतनं, वालिना रामस्य भर्त्सनं, वालिना स्वपुत्राङ्गदस्य रामायार्पणं, भ्रात्रे सुग्रीवाय तस्य उपदेशदानं, ततो रणाच्च, सुग्रीवेण वालेरौर्द्ध्वदेहिकक्रियासम्पादनं, किष्किन्धागमनञ्च।

सप्तमे—वर्षावर्णनं, मेघोदयात् रामस्य विलापः वर्षासमनन्तरञ्च शरदागमे रामस्य उत्कण्ठा, रामवाक्येन लक्ष्मणस्य कपिसमीपगमनम्, सुग्रीववाक्येन तावतां कपिसेनानां समागमः, कपिसेनाः प्रति सुग्रीवस्य उपदेशः, सुग्रीवेण शतवलिनामधेयस्य कपेः दीगुच्यां, सुसेनस्य प्रतीच्यां, कोटिसंख्यककपिसेनापरिवृतस्य विनतसंज्ञकस्य प्राच्यां प्रेषणं, कपिसैन्यानां कस्यांचित् गिरिगुहायां मेरुसावर्णिदनुजस्य कन्यया स्वयंप्रभया सह सच्चात्कारः, विफलमनोरथस्य अङ्गदस्य तथा जाम्बवतो हनूमतश्चापि प्रायोपवेशनं, तेषामन्तिके कस्यचित् पतत्रिणः आगमनं, तं समीच्य कपीनामुत्कण्ठा, जटायुषो भ्राता इत्यवगम्य तेषामुत्कण्ठात्यागः, पक्षिणा तेभ्यः उपदेशप्रदानं, लङ्कास्वरूपवर्णनञ्च, पक्षिवाक्येन वानराणां महेन्द्रशैलं प्रति गमनं, तस्मात्तेषां समुद्रदर्शनं, समुद्रवर्णनञ्च।

अष्टमे—हनूमता सागरस्य लंघनं, पथि तस्य कस्याश्चित् राक्षस्याः वदने प्रवेशः, तस्याः जठरं विदार्य्य निर्गमणं, हनूमता मैनाकस्य सन्दर्शनं, मैनाकेन हनूमतः तत्रावस्थानाय प्रार्थना, मैनाकं प्रति हनूमतः उक्तिः, तस्मादाकाशवर्त्मना गच्छतस्तस्य

बलमरगन्तुं कयाचिज्जलविहारिण्या राक्षस्या शतयोजनमुखव्यादानं, तस्याः जठरे प्रविष्टस्य हनूमतस्तदज्ञातेन निर्गमणं, ततः समुद्रकूलमवतरतस्तस्य दिवसे आत्मगोपनार्थं शशवत् क्षुद्ररूपधारणं, रात्रौ स्वकार्य्याय लङ्कां प्रति गमनं, तत्र परस्परं जल्पतां निशाचराणां मुखेन रावणगुणसमाकर्णनं, लङ्कावस्थायाः सन्दर्शनं, रावणावलोकनञ्च, प्राकाराधिगतेन नानाचिन्तयता हनूमता अशोकवनस्य सन्दर्शनं तत्र गमनञ्च, तस्मिन् मारुतिना निखिलविषादावासरूपायाः सीतायाः दर्शनं, तदैव रावणस्य तत्रागमनं, कामाभिभूतेन रावणेन सीतायाः अनुनयः, प्रलोभनवचनस्य व्यापनञ्च, तदुत्तरे सीतया राक्षसपतेः भर्त्सनम्, तदुत्तरेऽपि रावणेन सीतायाः तर्ज्जनं, गृहं प्रति गच्छता तेन सीतायाः भयार्थं क्रूरदर्शनानां राक्षसीनां नियोगः, ताभिः सीतायाः तर्ज्जनम्, तदवसरे तत्र त्रिजटायाः उपस्थितिः, त्रिजटायाः गुरुकठोरवाक्येन राक्षसीनां स्वस्वशय्यापरिग्रहः, मारुतिना सीतायै रामलक्ष्मणवृत्तान्तस्य कीर्त्तनञ्च। तेनैव वैदेह्याः समाश्वासनं तया च रामाभिज्ञानार्थं हनूमतः स्वीयचूड़ामणेः प्रदानं, हनूमता अशोकवनस्य भञ्जनम्।

नवमे—राक्षसीभिः रावणाय अशोकवनभञ्जनवृत्तान्तस्य निवेदनं, मारुतिविनाशार्थं रावणस्य अशीतिसहस्रकिङ्करान् प्रति निर्देशः, राक्षससैन्यैः सह हनूमतो युद्धं, हनूमतः तेषां पराभवः, निर्ज्जितैः सैन्यै रावणाय युद्धपराभववृत्तान्तस्य कथनं, पुनः रावणेन युद्धाय सैन्यानां प्रेरणं, पराभूतेषु तेषु भूयः रावणेन

स्वतनयस्य अक्षस्य प्रेरणं, अक्षेण सह हनूमतो युद्धं, हनूमता परिघप्रहारेण अक्षस्य भूमौ पतनं, पुनः हनूमता अशोकवनस्य पीडनं, मारुतेर्विनाशाय रावणेन इन्द्रजितः प्रेषणं, इन्द्रजितः हनूमता सह युद्धं, इन्द्रजिता ब्रह्मास्त्रेण हनूमतो बन्धनं, राक्षससेनाभिः राक्षसाधिपस्य समीपं हनूतः आनयनं, रावणं प्रति विभीषणस्य उक्तिः, विभीषणं प्रति रावणस्यापि प्रत्युक्तिः, रावणं प्रति हनूमतः उक्तिः, हनूमन्तं प्रति रावणस्य च प्रत्युक्तिः, रावणेन रामनिन्दाप्रकटनं तदुत्तरे हनूमता रामप्रशंसायाः कीर्त्तनञ्च ।

दशमे—वल्कलवस्त्राद्यैः परिवेष्टितस्य प्रज्वलतो लाङ्गूलस्य खमुत्पतितस्य हनूमतो राक्षसैरवलोकनं, हनूमता लङ्कायाः दाहः । चतुर्दिक्षु पलायमानै राक्षसैर्विह्वलतायाः अभिव्यक्तिः । सीतासन्दर्शनार्थं हनूमतोऽशोकवनगमनं हनूमता वनाभ्यन्तरे तरुमूलाधिशयानायाः सीतायाः अवलोकनं । इदानीं माल्यवति गिरौ श्रीरामसमीपं गमिष्यामीति तस्याः कथनञ्च, पर्व्वताभिमुखं गच्छन्तं तं समीक्ष्य वानराणां मुहुर्मुहुः मूर्च्छा । हनूमता वदरिकाश्रमस्थस्य सानुजरामस्य समीपे उपस्थितिः, रामेण मैथिल्य-भिज्ञानस्य दर्शनम् । मारुतिना सीतावस्थायाः कीर्त्तनं । अङ्गद-पृष्ठारूढयोः रामलक्ष्मणयोः महेन्द्राचले गमनं, महेन्द्राचल-दर्शनञ्च महेन्द्राचलतः वानरसैन्यानां सागरतीरगमनं, प्रसङ्गतः सागरवर्णनञ्च । रामविरहवर्णनं रामं प्रति लक्ष्मणस्य उक्तिश्च ।

एकादशे—प्रसङ्गतः चन्द्रास्तादिविधविविधविषयवर्णनं, ब्रह्म-

राक्षसादिकुरराक्षसपरिवृतस्य दशाननस्य सभाप्रवेशः।

द्वादशे—जागरितं कृतदेवकार्य्यं विभीषणं प्रति तस्य मातुरुपदेशः, विभीषणस्य रावणसंसदि गमनञ्च। दशाननेन सभासदं प्रति स्वकर्त्तव्यस्य जिज्ञासा, स्वस्वायुधस्पृष्टानां प्रहस्तप्रमुखराक्षसानां दशाननं प्रति उक्तिः, तैरात्मबलस्य स्पर्द्धनं, विभीषणस्य तान् प्रति उक्तिः, युद्धनीतिकथायाः कथनम्। सीताप्रत्यर्पणार्थमुपदेशदानं, नानानीतिकथाकथनञ्च, दशाननस्य मातामहस्य माल्यवतः विभीषणवाक्ये अनुमोदनं, रावणं प्रति उपदेशदानञ्च माल्यवतो विभीषणस्य च वाक्येन जागरितस्य निद्राविलचक्षुषः कुम्भकर्णस्य रावणं प्रति उपदेशः, पुनस्तस्य निद्रा, विभीषणेन च रावणं प्रति राक्षाणां नानादुर्लक्षणस्य विवृतिः, रावणेन कठोरोक्त्या विभीषणस्य भर्त्सनं चरणाभिताड़नञ्च। विभीषणस्य तस्मात् रामान्तिकगमनं, हनूमद्वाक्येन विभीषणस्य सुचरितं ज्ञात्वा रामेण तस्य लङ्काधिपत्ये नियोजनम्।

त्रयोदशे—रात्रिप्रभाते रामबाणाघातेन समुद्रस्य शुष्कत्वं, पत्न्याः गङ्गायाः हस्तधारणपुरःसरस्य समुद्रस्य रामचरणे प्रणतिः, रामं प्रति बहुभाषणञ्च। वानरसैन्यैः वारिधिर्बन्धनं, तेषां लङ्कातोरणद्वारगमनञ्च। रावणशक्तिमवगन्तुं रामसैन्यानां प्राकारतरुमञ्चाद्यारोहणम्।

चतुर्द्दशे—स्मरविह्वलात्मना रावणेन सीतायै राममायामुण्डं सन्दर्श्यात्मसैन्यानां प्रेषणं, रावणाज्ञया प्रहस्तस्य पूर्वद्वारि महापार्श्वस्य महोदरस्य च दक्षिणद्वारि, इन्द्रजितः पश्चिमद्वारि गमनं,

स्वस्य च उत्तरद्वारि विरूपाक्षस्य पुरमध्ये अवस्थितिः, रामस्य लक्ष्मणं सैन्यं प्रति च युद्धाज्ञा, उभयोः पक्षयोः युद्धावतरणं, इन्द्रजितः नागास्त्रेण रामलक्ष्मणयोः मूर्च्छा, सुग्रीवादिसेनानायकानां क्रन्दनं, सुग्रीवस्य पर्वताधिक्षेपेण इन्द्रजितः पितुरन्तिके पलायनं रावणाज्ञया राक्षसैः सीतां पुष्पके अवस्थाप्य मूर्च्छितयोः रामलक्ष्मणयोः तस्यै सन्दर्शनं, तस्मात् सीतायाः विलापः, मुहुर्मुहुर्मूर्च्छा च, रावणभगिन्या त्रिजटया सीतायाः सान्त्वनं, अपगतमोहस्य रामस्य मूर्च्छितं लक्ष्मणं दृष्ट्वा शोकः, तेन परलोकं गन्तुं सुग्रीवस्य आमन्त्रणं, सुग्रीवस्य रामलक्ष्मणौ किष्किन्धां नेतुम् अङ्गदं प्रति आदेशः, तस्य राक्षसवधे प्रतिज्ञा च ; विभीषणोपदिष्टेन रामेण गरुड़स्य स्मरणं, समुपागते गरुड़े नागानां वारिधौ निमज्जनं, लक्ष्मणस्य मूर्च्छापगमः, रावणादिष्टस्य धूम्राक्षस्य तथा अकम्पस्य च पर्य्यायेण युद्धे गमनं, हनूमता तयोः निधनञ्च, रणागतस्य प्रहस्तस्य नीलेन कपिना निधनञ्च ।

पञ्चदशे—रावणेन कुम्भकर्णनिद्राभङ्गाय चरस्य नियोगः, तैश्च विविधोपायैः तस्य निद्रातः प्रबोधनाय चेष्टा, तस्य चाकालिकजागरणं, रावणेन कुम्भकर्णाय तावतः युद्धवृत्तस्य कीर्त्तनं, तदुत्तरे कुम्भकर्णस्य उपदेशोक्तिः, तस्य युद्धयात्रा, युद्धे वानरसैन्यानां छत्रभङ्गः, अङ्गदवाक्येन पुनस्तेषां मिलनं, कुम्भकर्णं प्रति वानरसैन्यैः शिलादिवर्षणं, कुम्भकर्णगृहीतगिरिप्रहारेण सुग्रीवस्य मूर्च्छा, कुम्भकर्णगृहीतसुग्रीवेण संज्ञां प्राप्य कुम्भकर्णस्य नासाकर्णयो कर्त्तनं, रामेण कुम्भकर्णस्य निधनं, अतिकायत्रि-

शिरसादीनां रावणपुत्राणां युद्धे गमनं लक्ष्मणेन अतिकायस्य निधनं, इन्द्रजितः शरेण रामलक्ष्मणादीनां मूर्च्छा, महौषधि-समानेतुं विभीषणेन हनूमतः प्रेषणं, औषधिनिरूपयितुमशक्तेन हनूमता पर्व्वतस्यानयनं, औषधीनां घ्राणेन तेषामेव मोहितानां मूर्च्छाभङ्गः, अङ्गदेन अकम्पनस्य च हननं, सुग्रीवेण कुम्भकर्ण-पुत्रस्य कुम्भस्य संहारः, निकुम्भस्य च ग्रीवाकर्षणम्, विजयेन कपिसैन्यानां हर्षश्च ।

षोड़शे—अतिकायादीनां निधने दशाननस्य खेदः इन्द्रजिता रावणस्य प्रबोधनम् ।

सप्तदशे—इन्द्रजितः युद्धायोद्योगः, युद्धे गमनञ्च, आकाशगतेन मायामय्याः सीतायाः विनाशायोद्योगः, हनूमता तस्य निवारणम्, इन्द्रजिता तस्याः निधनञ्च, हनूमतः सीतानिधनवृत्तावगतयोः रामलक्ष्मणयोः मोहः, विभीषणवाक्येन तयोः धैर्य्यं, निकुम्भिला-यज्ञागारे लक्ष्मणविभीषणयोः प्रवेशश्च, विभीषणं प्रति इन्द्रजितः उक्तिः, इन्द्रजितं प्रति विभीषणस्य प्रत्युक्तिः, लक्ष्मणेन इन्द्रजितः निधनं, तन्निधनवार्त्ताश्रवणेन रावणस्य सीतां हन्तुमुद्योगः, मित्रादीनां वचनेन तस्मान्निवर्त्त्य युद्धायोद्योगः, रावणेन लक्ष्म-णस्य निधनं, हनूमदानीतस्यौषधेः स्पर्शेन तस्य पुनर्जीवनलाभः, रामास्त्रमोहितेन रावणेन सह तस्य सारथेः पलायनं, रावणेन सारथेर्भर्त्सनं, पुनस्तस्य युद्धाय आगमनञ्च, रावणेन मायया बहुस्वमस्तकस्य प्रणयनं, रामेण तेषां छन्तनं, पुनः पुनः रावण-शिरसामुत्भवः, मातलिवाक्येन रामेण रावणवधाय कल्पितस्य

ब्रह्मार्पितशरस्य स्मरणं, ध्यानागतेन तेनैव शरेण रावणस्य निधनञ्च, विनाशमुपगते च तस्मिन् देवादीनां हर्षः, विभीषणस्य च क्षोभः।

अष्टादशे—रावणादीनां निधनेन विभीषणस्य खेदोक्तिः, पौरवासिभिः तस्य सान्त्वनम्।

एकोनविंशे—रामवाक्यावसाने विभीषणस्य प्रत्युक्तिः, मन्त्रिणः प्रति लङ्कागमनाय विभीषणस्य निदेशः, दशाननस्य अन्त्येष्टिक्रियार्थं तैः राजयोग्यवस्तुनामाहरणं, विभीषणं प्रति उपदेशदानञ्च, रामेण विभीषणस्य मूर्द्धाभिषेचनं, उपदेशदानञ्च।

विंशे—हनूमता सीतायै रावणनिधनवार्त्तायाः ज्ञापनं, रक्षयित्रीणां राक्षसीनां निहन्तुं तस्याः अनुमतिप्रार्थना, तदुत्तरे सीतायाः हितकथनं, सीतामानेतुं हनूमता रामाय प्रार्थना, रामादेशितस्य विभीषणस्य सीतासमीपगमनं, सीतां प्रति तस्योक्तिः शिविकारोहणेन तस्याः रामान्तिके गमनं, रामेण तस्याः प्रत्याख्यानं, रामं प्रति सीताया उक्तिः, लक्ष्मणं प्रति तस्याः चिताशय्यार्थमनुमतिः, तेन प्रज्वालितायां चितायां तस्याः प्रवेशः।

एकविंशे—प्रज्वलता हुताशनेन सीतां धृत्वा रामं प्रति तस्याश्चरित्रस्य विशुद्धित्वख्यापनं, ब्रह्मादिदेवतानामपि तथात्वकीर्त्तनञ्च।

द्वाविंशे—हनूमन्तं प्रति अयोध्यागमनाय रामस्य आदेशः, अयोध्यायाः पथकथनञ्च, गते हनूमति अयोध्यागमनाय रामेण सुग्रीवस्य तथा विभभीषणस्य च अनुनयं, तयोः रामं प्रति उक्तिः, पुष्पकारोहणेन तेषां अयोध्यां प्रति गमनं, पथि रामेण सीतायै सेतोः मलयस्य विन्ध्यस्य माल्यवतः गिरेः ऋष्यमुकस्य

दण्डकारण्यस्य पम्पायाश्च सन्दर्शनं, सपौरमातृभिः भरतस्य रामदर्शनाय आगमनं, रामस्य पुरः प्रवेशः, भरताय यौवराज्ये अभिषेकः, अश्वमेधयज्ञस्य आयोजनञ्च ।

**नायकादिसिद्धान्तः**—अस्य नायकः श्रीरामचन्द्रो धीरोदात्तः । नायिका च स्वकीयामुग्धा जनकनन्दिनी सीता । प्रतिनायकोऽत्र धीरोद्धतपापकृद्व्यसनी लङ्काधिपतिर्दशाननश्चाल-म्बनविभावौ, दूतमुखोच्चारितानि उद्दीपनानि । नायकप्रतिनायकयोः कोदण्डाकर्षणादयोऽनुभावाः । उत्साहः स्थायी । शृङ्गारादयो रसाव्यभिचारिणः । वीरोनामरसोऽङ्गी, अन्येऽङ्गरसाः, रीति-र्गौरी ; ओजोनाम गुणः, श्रीरामप्रहितो दूतो निसृष्टार्थः, इति ।

०००—(००)—०००

## कालिदासः—

इह खलु वसुधायां ये तावत् प्राचीनतमाः सारस्वतभाण्डार-संगृहीतमञ्जुलकवित्वपूर्णप्रबन्धपुञ्जरचनापटवः सामाजिकानाञ्च सुकुमारमतीनां मानसानि रसभावादिभिरनुरञ्जयन्ति, निखिल-विबुधजनानां काव्यशास्त्रप्रणेतारः कवय एवं तेषु तावत् कवीना-मग्रसरोऽयं कालिदासनामा महाकविः अस्मिन् देशे विदितवैभवो यूरुपादिदेशविस्तीर्णयशःपटलो भवद्भिरपि सम्यक् विदितगुण-गणोऽपि मया समुपश्लोकितः साम्प्रतमानन्दमनवधिमुत्पादयेद्-वश्चेतसीति समुन्यसते तद्गतवृत्तान्तजालम् । किन्तु परितापक-रोऽत्र यन्महाकवेरवितथोदन्त इदानीमपि नाविष्कृत आसीदिति ।

स खलु कदा कस्मिन् पत्तने सम्वत्सरे वा कर्हि जन्मना कमन्वयमलमकरोत्, को वा स महात्मा य ईदृगतुलनीयं सुतमाससाद, इत्येतावन्तः कविविषयकवृत्तान्ताः नितान्तदुर्लभतया प्रतिभान्ति परं जानीमहे क्लेशेनासादितस्य गाढतरतिमिरमयगिरिगह्वरप्रदेश-विचुम्बितस्य उद्धारप्रयास इव रत्नान्वेषिणाम् ; महाकवेरस्य चरित-वर्णनप्रयासोऽस्माकं विफलतामुपगमिष्यतीति। तथापि आधुनि-कानां पुरातत्त्वान्वेषिणां मतमनुसरन्तो विविधकिंवदन्तीनामा-कलय्य सारं यथायथं वयमिदानीमाकलयिष्याम स्तस्यामलकी-र्त्तेरितिवृत्तम्।

अनुश्रूयते तावत्, पुरा मालवदेशमध्य उवास कश्चित् ब्राह्मण-सुतः। अविज्ञातलोकतन्त्रो गोरक्षणेन निर्व्वाहयामास संसार-यात्राम्। तस्मिन् देशे काचित् परमा विदुषी कन्या विद्यावती-नाम विवाहार्थं पित्रा समानीतान् पात्रीभूतान् द्विजान् वाद-विचारेण पराजिग्ये। एवमागत्यागत्य तत्सकाशात् विचारतः पराजयमुपगच्छत्सु परं प्रतिनिवृत्तेषु बहुषु राजकुमारेषु पराज-यभयात् यदान्ये राजकुमाराः विवाहार्थं नागच्छन्ति, तदा तत्-पिता विचाराभावेनैवागतमात्राय तनया देयेति प्रतिज्ञाय पूर्व्व-पूर्व्वागतानामादानेन विफलकामेन चतुर्द्दिक्षु पुनर्वरानयनार्थं दूताः प्रेषिताः। ते च स्वावलम्बनीं तरुशाखां कृन्तन्तमेकं ब्राह्मणवटु-मपश्यन्, दृष्ट्वैव च एषोऽल्पबुद्धिस्तस्याः पण्डितंमन्यायाः अनुरूपो वर इति विनिश्चित्य बलादेव तं भयविकलचेतसं तत्सकाशमा-निन्युः। ततश्च तयोर्विनिवृत्ते पाणिग्रहे तमत्यन्तमरसिकमत्त-

कुलशिखामणिं ज्ञात्वा सा विद्वत्तमा रहसि आकार्य्य निर्वूढं भर्त्सयित्वा गृहतोऽपसारितवती। सोऽपि तादृशापमानात् मर्त्तुकामः काननमेत्य उद्बन्धनेन प्राणान् त्यक्तुमिच्छन् दर्भमयीं रज्जुं गललग्नमकरोत्। दैवगत्या तस्मिन्नेवक्षणे तस्य अनतिदूरवर्त्तिन्याः तत्रत्यदैत्यदलदलनगलद्रुधिरानुरञ्जितायाः हरगलनीलिमाश्लिष्टाम्बिकायाः चरणयुगलं तस्य दृष्टिपथपर्त्तितया मरणात् प्रतिनिवृत्तिमनयत्। तदमरीकवरीभारसंसृष्टचरणकमलं सेवितुमिच्छन् तस्माच्च प्रतिनिवृत्तत्र बहुतिथिं कायक्लेशादिभिः दुष्करकर्म्मानुचरन् कथमपि भगवतीमाराधयामास। सा च दीनतारिणी तस्मिन्कस्मिन्नहनि प्रत्यक्षमभ्येत्याह—'अयि भूसुर! त्वत्परिचर्य्यया प्रसन्नाहं सांप्रतम् गच्छ निजायतनं स्फुरतु ते निखिलकविजनसुलभा प्रतिभा' इत्यभिधाय अन्तर्दधे। ततश्च परमां प्रीतिमालभमानः पुरं गत्वा भवनद्वारि तिष्ठन् रुद्धार्गलत्वेन असकृत् भार्य्यां 'द्वारं देहि द्वारं देही'ति व्याजहार। सा तु तदाकर्ण्य पतिरित्यवधार्य्य 'अस्ति कश्चिद् वाग्विशेषः' इत्यपृच्छयत्।

सोऽपि तथेत्युक्त्वा भवनान्तं प्रविश्य 'अस्त्युत्तरस्यां दिशि देवतात्मा' इत्याद्यैः श्लोकैः कुमारसम्भवं नाम महाकाव्यम्, 'कश्चित् कान्ता विरहगुरुणा' इत्यादिपद्यैः मेघदूताख्यं खण्डकाव्यम्, 'वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये' इत्यादिगाथाभिः रघुवंशं महाकाव्य प्रणीतवान्। पश्चात् पौरवा एतत् कवितोपभोगसुखमनुभुञ्जमानाः सातिशयविस्मयमुपगताः यथायथं तन्निखिलमुदन्तमुपगम्य कालीप्रसादाल्लब्धविद्यत्वेन 'कालिदासः' इति नाम्नाजुहुवुः।

एतदेवैतिह्यं वितथमवितथं वा तद् ज्ञातुमलंस्म। तस्य अद्भुततमां कवितां वाग्वैभवञ्च समीक्ष्य जनैरुपनिबद्धेयं विचित्रतमाख्यायिकेति मामकानां हृदयम्। अवगम्यते च तस्य काव्यपाठेन सर्वथायं कविः मेधावी, रामायणादिप्राचीनतमान् ग्रन्थान्, तथान्यानपि शास्त्राण्यधीत्य सकलशास्त्रेषु तथा लोकाचारसमाजप्रचलितव्यवहारविषयेषु निखिलभूधरकन्दरतीर्थादिज्ञानविज्ञान-भूगोल-खगोलादिकेषु च परं प्रावीण्यमुपागमदिति। तथा हि विरहविधुरस्वभाववर्णनमधुरे मेघदूते काव्योत्तमे रघुवंशे च सकलभुवनभूधरकन्दराणां सिद्धकिन्नरयक्षगन्धर्वादीनां विदग्धानामपि स्वस्वधामवर्णनपाटवं, तथा मानचित्रप्रदर्शनञ्च समीक्ष्य न केषां श्रुतिविवरं मधुनाप्याययतितराम्। अन्यत्र सोमवंशप्रसूनस्य हृतदितिजशरकिणलाञ्छनस्य पुरुरवसो देवाङ्गनया उर्वश्या समं प्रीतिप्रवणसंस्थापनया नवीनया दिशा आलोचयितॄणां चेतसि प्रद्योतयति कविः कामपि स्वर्गीयालोकधाराम्। कुमारसम्भवे भूधरपार्वतीमेनाकवसन्तरतिविलापसमाधिवर्णनादिमिषेण नानाभावसुसमावेशिततया विजयते कविरनेरुष्यः सर्वथा कविप्रतिभया नानाशास्त्रज्ञानसम्पन्नतया च। अभिज्ञानशकुन्तले नाट्यकलासंसृष्टे यादृशी कल्पना कविकालिदासस्य, तादृशी भावपरिशुद्धा कल्पना सुदुर्लभा, इति तस्य लेखनीम्। यथा हि तत्र प्रथमं शकुन्तलायाः दुष्मन्तदर्शनप्रसङ्गे उक्तिप्रत्युक्त्या उभयोः परस्परमनुरागाभिव्यक्तौ घटतापारम्पर्य्येण मत्तवारणावतारणया तादृक् प्रगाढप्रणयाभिव्यक्तमध्येऽपि निमिषेण तयोर्विच्छेदमुत्पाद्य प्रक्र-

सोपसंहारयोश्च सामञ्जस्यं रचयित्वा अङ्कावतारं विदधानः कल्पनाकुञ्जकोकिलः श्रीमान् कालिदासः। सनैव तादृक्कल्पनामन्तरेण तादृशव्यापारे सुष्ठु भवितुमन्यत् प्रभवति किमपि कल्पनाकल्पितविषयेषु अन्यदिति। इत्थमेव नाटकस्य सर्व्वाङ्गमननुभूतभावनिवहधारया संप्लाव्य विजयतितरामत्र जगति कविकुलविभाकरस्य सर्व्वतोऽस्खिनी प्रतिभाशक्तिः। एतत्तावत् शकुन्तलासमालोचनावसरे सविशेषमुपपादितमस्माभिः, पुनरुक्तिदोषशङ्कया तेषां दिङ्मात्रमवताय्यं समुपन्यस्यते। संप्रति कविप्रादुर्भावसम्बन्धिनी वर्त्तते सुमहती विप्रतिपत्तिः। दृश्यते यद्वि विक्रमादित्यस्य परिषदि नवरत्नान्यासन्, तेषु एव कालिदास इति प्रसिद्धिः। तथाहि—

"धन्वन्तरिक्षपणकामरसिंहशङ्कु-
वेतालभट्टघटकर्परकालिदासाः।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य॥" इति,

अत्र तावत् यो हि विक्रमशब्दः समुपलभ्यते, तस्यायमर्थः प्रतिपाद्यते प्रसिद्धसंस्कृतग्रन्थपर्य्यालोचकेन सार् उइलियम् इत्यभिधेयेन, यत् बहूनां नृपाणामेवानेनोपाधिना समुपपत्तिः दृश्यते अतः विजयितॄणां भारतीयभूपालानामेव इयं संज्ञेति, य एव पराक्रमे सहस्रदीधितिसमः स एव विक्रमार्कः। एवमपि सम्पद्यते जनपरम्परागता काचित् वार्त्ता, यत् मालवेन्द्रो भोजराज स एव विक्रमार्कः, तस्यैव परिषदि नवरत्नान्यासन्। ख्रीष्टीयैकादशशतके वर्त्तते तस्य राज्ञो विद्यमानतेति यथायथं सुमहता प्रमाणेन प्रमा-

णोक्तं केनचिच्छिलालेखकेन। केचिदेव कर्णाटके राजसेवकत्वेन यवनिकाप्रसङ्गात् तस्यानतिप्राचीनतां दर्शयन्ति। तत्र विद्यमाना प्राकृतभाषापि तमेवार्थं प्रत्याययति। एवमपि च कविकाल-निर्णयव्यापारेषु प्रसिद्धतमेन वोवरनाम्ना केनचित् विदुषा कालि-दासस्य ख्रीष्टीयचतुर्थशतकमेव आविर्भावकाल इति प्रत्यादिष्टम्। इङ्ग्लिङ् नाम्ना केनचित् विदुषा पञ्चशताधिकपञ्चशततमे वत्सरे तस्य जीवनकाल इति प्रमाणेन प्रमाणीतम्; नितरां बहुपण्डितै-र्बहुधा चिन्तितत्वात् तस्य कालनिर्णयोऽप्यसुकर एव संवृत्तः। परं ज्योतिर्विदाभरणे—

"काव्यत्रयं सुमतिकृद्रघुवंशपूर्वं जातं
यतो ननु कियच्छ्रुतिकर्मवादः।
ज्योतिर्विदाभरणकालविधानशास्त्रं
श्रीकालिदासकवितो हि ततो बभूव॥
वर्षे सिन्धुरदर्शनाम्बरगुणैर्याते कलौ सम्मिते।
मासे माधवसंज्ञकेऽत्र विहितो ग्रन्थक्रियोपक्रमः॥"

इत्याभिर्यत् कालनिर्णात्मकं शास्त्रं कविना कालिदासेन प्रणीतं प्रतिभाति, तत्र च यत् कालोल्लेखोऽस्माभिरुपलक्ष्यते, स एव उज्ज-यिनीपतेर्विक्रमादित्यस्य समयःसविशेषं प्रत्यादिशति। यथाहि—

"यद्राजधान्युज्जयिनी महापुरी
सदा महाकालमहेशयोगिनी।
शङ्क्वादिपण्डितवराः कवयस्त्वनेके
ज्योतिर्विदः समभवंश्च वराहपूर्वाः॥

श्रीविक्रमस्य बुधसंसदि प्राज्ञबुद्धेस्ते-।
रप्यहं नयसखः किल कालिदासः।" इति।

किञ्च—अष्टषष्ठ्युत्तरत्रिसहस्रसंख्यकलेरब्दवृन्दे याते तद्ग्रन्थप्रणयनम्। तेन इतः पूर्व्वं द्व्यधिकनवशतोत्तरैकसहस्रपरिमितात् वर्षगणनात् पूर्वं ज्योतिर्विदाभरणं, तत्पूर्वञ्च रघुवंशादिकं निर्म्मितमिति प्रतिपद्यते। किन्तु दृश्यकाव्यानां ज्योतिर्विदाभरणे नोल्लेखतया तत्परवर्त्तित्वं वक्तुं युज्यते, येन तत्तद्ग्रन्थे प्रस्तावनायां—'आर्य्ये, इयं हि रसभावविशेषदीक्षागुरोर्विक्रमादित्यस्य अभिरूपभूयिष्ठा परिषत्। अस्यां च कालिदासग्रथितवस्तुना—' इत्यादि। अत्र तावत् वाक्यकदम्बकेषु विक्रमादित्यस्य परिषदि यत् कालिदासस्य नामोल्लेखः समीचयते, तेन तस्य कवेः राज्ञः समानकालत्वं स्फुटत एव प्रतिभाति। तन्नरपतेस्तु विद्यते 'संवत्' नाम्नी वत्सरगणना, इदानीं तु खीष्टीयपञ्चदशाधिकोनविंशशताब्दी। संवत्सरसंज्ञयैव द्विसप्ताधिकोनविंशशताब्दी। अतः खीष्टजन्मनः सप्तपञ्चाशत्वर्षात् पूर्व्वं विक्रमादित्यस्य जीवनकालः, सुतरां तदीयसभासदः कालिदासस्यापि सएव समयः। अपि च पदवाक्यप्रमाणपारावारीणपण्डितवर्य्यभाश्रजादिः ब्रह्मगुप्तप्रणीतस्य खण्डखाद्यस्य टीकातः प्रमाणयति, यत् नवरत्नानामिकतमस्य रत्नस्य आचार्य्यपादस्य वराहस्य सप्ताधिकपञ्चाशत् शकाब्द्यां मृत्युरभूदिति, नितरां सप्ताधिकपञ्चाशतशकमिते नवरत्नस्य सत्त्वाकाल एव अभ्रान्तमविसंवादितञ्च। यातु गवेषणकारिणां कथा, तस्य कविकुलयशस्तिलकस्य श्रीमतः कालिदासस्य

नाटकादिग्रन्थपरिशीलनपरैरस्य वाक्पाटवं रचनावैदग्ध्यं वृत्ति-सौष्ठवमर्थगौरवञ्च समालोक्य भवभूतिभट्टनारायणादिकविमुख्या-दूर्द्धतने काले तस्य महाकवेरुत्पत्तिरिति स्पष्टमुदीर्य्यते, अवाध-मव्याहतमुपपद्यते चेति सर्व्वथाविरुद्धं वचः। कवेरन्यतः कालि-दासस्य कथं प्राधान्यं, किं तस्य हेतुरित्यादि सकारणं तस्य ग्रन्थालोचनावसरे प्रमाणीकृतमस्माभिः। नेहोक्तं सन्दर्भगौरवभी-त्येति कृतं पल्लवितेन।

—०००(*)०००—

## भवभूतिः—

कष्टं खलु भोः, कष्टम् !! यत् श्रीमन्महाकवेर्भवभूतेरितिवृत्तं नूनं न बह्वायासेनापि क्वापि पर्य्याप्तं संलभामहे। केवलं तद्रचित-महावीरचरित-मालतीमाधवोत्तररामचरिताख्यग्रन्थत्रयस्य प्रस्ता-वनासु यत् किञ्चिन्मात्रमवगतिर्घटेत, तदितरन्नान्यत् किमपि।

तत्र पुरा दक्षिणापथे विदर्भेषु पद्मपुराभिधेये नगरे केचि-त्तैत्तिरीयाः काश्यपा उदुम्बरोपाभिधाना ब्रह्मवादिनो द्विजा ऊषुः। तेषामन्वयसम्भवो महाकविर्नाम कोऽपि वाजपेययाजी विप्र आसीत्। तस्मात् पञ्चमः पुरुषो भवभूतिः। तस्य पिता नीलकण्ठः, जननी च जातुकर्णीनाम, पितामहो भट्टगोपालः, गुरुश्च ज्ञान-निधिः। अधीतवानयं तर्क-व्याकरण-पूर्व्वोत्तरमीमांसादीनि शास्त्राणि। अस्य पितृकृतं नाम श्रीकण्ठ इति। तदपि—

"तपस्वी कां गतोऽवस्थामिति स्मेराननामिव।
गिरिजायाः स्तनौ वन्दे भवभूतिसिताननौ॥" इति

पद्यकरणोत्तरं तस्यैव भवभूतिरिति नामान्तरं जातम्। आर्य्यासप्तसत्या अनन्तपण्डितकृतटीकायाम्—'भवभूतिः संबद्धात्' इत्याद्यार्य्याव्याख्या तथैव प्रतीतिं स्मारयति। वीरराघवरचितायां महावीरचरितटीकायामप्येवमेव स्यात्। परन्तु तत्र "साम्बा पुनातु भवभूतिः पवित्रमूर्त्तिः।" इत्यलमधिकप्रमाणवाग्विघट्टनया। तेनैव नाम्ना तु वाचा कविरयं जगतित्र सिद्धिमास्थाय तनोत्यतिमात्रं विद्वज्जनगणमानसमनन्यसुलभकविप्रतिभया।

राजतरङ्गिणीतः कान्यकुब्जाधिपतेर्यशोवर्म्मणः परिषदि भवभूतिरासीदिति प्रमाणमस्माभिरुपलभ्यते यथा—

"कविवाक्पतिराजश्रीर्भवभूत्यादिसेवितः।
जितो ययौ यशोवर्म्मा तद्गुणस्तुतिवन्दिताम्॥" इति

अस्य भूपतेर्यशोवर्म्मणः समयस्य ख्रीष्टसप्तशताब्दीपूर्व्वार्द्धतया कवेरपि समयो निरुक्तसप्तमशतकमिताब्दे एवेत्यर्व्वाचीनानामूहः किमत्र तर्कावसरोऽपि वर्त्तते मनाक्। तमेव यशोवर्म्माणं काश्मीरपतिर्ललितादित्यः चतुर्विंशत्युत्तरसप्तशततमख्रीष्टाब्दे एकविंशदुत्तरसप्तशततमखृष्टाब्दे वा पराजिग्ये। तदयं यशोवर्म्मणः सभासद् भवभूतिस्तात्कालिक इति निःसन्दिग्धमनुमातुं शक्यते, प्रबन्धकोषकर्त्ता राजशेखरस्तु यत् जैनसन्न्यासी वप्पभट्टिर्यशोवर्म्मणः सुतममरराजं त्रिपञ्चाशदुत्तरसप्तशततमखृष्टाब्दे जैनधर्म्मे दीक्षितमकरोत्, सुतरां तदा यशोवर्म्मणः मरणमन्तरेण तद-

ङ्गजस्य राज्याभिषेको न सम्भवतीति। अतएव तत्समानकालोत्पन्नयया कवेर्भवभूतेरमरराजपूर्ववर्त्तित्वं तद्राज्याभिषेकसमानकालिनत्वं वा वक्तुं समायुज्यते। अपरञ्च हर्षचरिते बहूनां कवीनां नामानि सन्निबद्धानि कविसुखेन वाणेन, किन्तु भवभूतेरनुल्लेखत्वात् तत्परवर्त्तित्वञ्च कवेर्विभाव्यते, तत्तु ज्ञेयं प्रज्ञावताम्। यतः एकादशशताब्द्यां सन्निबद्धे काव्यप्रकाशे अभिनवगुप्तस्यालङ्कारग्रन्थे च वामनाचार्य्यस्य नाम समुपलभ्यते तस्यैवालङ्कारसूत्रवृत्तौ दृश्यते भवभूतेर्नामनिर्देशः, अतएव अष्टमशताब्द्यां भवभूतिरासीदिति समवधारयितुं शक्यते। किं च विनवत्युत्तराष्टशततमाब्दे महेन्द्रपालः कान्यकुब्जे राजसिंहासनाधिष्ठितः आसीत्, तत् सभासमलंकुर्वतो राजशेखरस्य ग्रन्थे भवभूतेर्नाम समुपलभ्यते। एवं नवपञ्चाशदुत्तरनवशततमाब्दे सोमदेवविरचिते यशस्तिलके चतुःसप्तत्युत्तरनवशततमाब्दं पञ्चनवत्युत्तरनवशततमाब्दञ्चान्तरा स्थितस्य मालवराजमुञ्जसभापण्डितस्य दशरूपककारस्य धनञ्जयसोदरध्वनिककवेर्दशरूपके च दृश्यते भवभूतेर्नाम, सुतरां तत्पूर्ववर्त्तित्वमस्य कवेरिति किं तत्र विकल्पः। अतएव मन्यन्ते बहुश एव कृतिनः यदष्टमशताब्द्यां तस्य जीवनकाल इति।

परं कविराजकृतिषु महावीरचरितमालतीमाधवोत्तरचरिताख्यं रूपकत्रयमपहायान्यः कोऽपि प्रबन्धोऽस्माभिः सुबहुचेष्टयापि न क्वापि लभ्यते। केवलं शार्ङ्गधरपद्धतौ तु—

"निरवद्यानि पद्यानि यदि नाट्यस्य काङ्क्षति।
भिक्षुकक्षाविनिक्षिप्तः किमिक्षुर्नीरसो भवेत्॥" इति

-गदाधरभट्टसंकलिते रसिकजीवने च—

"अलिपटलैरनुयातां सहृदयहृदयज्वरं विलुम्पन्तीम् ।
मृगमदपरिमललहरीं समीर किं पामरेषु रे किरसि ॥
किं चन्द्रमाः प्रत्युपकारलिप्सया
करोति गोभिः कुमुदावबोधनम् ।
स्वभाव एवोन्नतचेतसां सतां
परोपकारव्यसनं हि जीवितम् ॥"

इत्येतानि पद्यानि भवभूतिप्रणीतत्वेनोपलभ्यन्ते । किन्त्वन्यस्य कस्यापि भवभूतिनाम्नः कवेः सुभाषितानि, उतान्येन केनचित् कविना प्रणीय उत्तररामचरितादिकृतो भवभूतेर्नाम्ना प्रक्षिप्तानि, तन्निर्णयोऽतीवासम्भव इति ।

अस्ति तावत् कविकृताविका प्रचलिता वार्त्ता, यद् रामायणवस्तु तद्बालचरित-वीरचरितोत्तरचरितानीति त्रितयाख्यया विभज्य नाटकत्रयं निरमायि तत्रभवता कविना श्रीकण्ठेन । ततः परं दुर्भाग्यतया गीर्वाणवाणीचरणपरिषेविकानाम्; तद्बालचरितं नाम नाटकं येन केनापि कारणकोटिकेन परममहिम्नः कालस्य कुक्षिकक्षे चिरलीनमासीत् । नूनं सम्भवत्येषा जनश्रुतिरवितथा युक्तियुक्ता च । येन तादृशकविप्रतिभासम्पन्नस्य परमविदुषो बाल-चरितं विहाय मध्योत्तरचरितरचनं न समीचीनं युक्तियुक्तं प्रमाणसहं वा वक्तुमुपयुज्यते ।

अपि हि—"कवयः कालिदासाद्या भवभूतिर्महाकविः" इति यन्महाकवित्वं भवभूतेः सूचितं तत् किं कविद्रुहिणः कस्यचि-

दीर्घप्रणोदितस्य कविपदबन्धवधिरस्योल्लोरठनोक्तिरथवा तस्य कवित्वरसोपचितहृदयस्य निरङ्कुशा वाणीयमिति यथार्थकवित्व-रसरञ्जिकाः परं काव्यकानसञ्चारिणः परमभावुकाः सर्वत एवातत्र प्रकृष्टतमं प्रमाणम् ।

परं दृश्यते तावदत्र जगति यत्र पाण्डित्यं न तत्र कवित्वस्य समावेशः किन्तु यस्मिन् खलु कवित्वस्य सम्भवस्तत्र पाण्डित्यं वा कथं कथमपि भवितुमर्हति। अत्र सर्वगुणोपचिते श्रीमति श्रीकण्ठे तद्द्वयमेवाविसम्बाधितमातनोत्यतितराम् । तस्यालो-चिते रूपकत्रये पर्य्यालोच्यतेऽस्माभिः स्थानेषु वेदवेदान्तोपनिषत्-सांख्यस्मृतिपुराणज्योतिःशास्त्रादीनां प्रतिबिम्बः प्रच्छन्नेन प्रत्याय-यति प्रतिबोधयति च पाठार्थिनां चेतांसि प्रसभम् ।

किञ्च दृश्यते तावत् मालतीमाधवस्य पञ्चमे अङ्के, वीरचरितस्य तृतीये, उत्तररामचरितस्य स्थानविशेषे च वेदान्तोदितविवर्त्त-वादस्य छायाङ्कपातः। एवमपि हि महर्षेर्भरतस्य नाट्यशास्त्रे वात्सायनस्य कामसूत्रे च तस्य प्रकष्टज्ञानमस्माभिरुपलभ्यते "सान्द्रानन्दक्षुभितहृदय" इत्यादि स्थलेषु पर्य्यालोचनेन। परं कवि-त्वेन दिशा यदा यदा कविरस्माभिः समीक्ष्यते तदा तदा तत्तुल्यः कश्चित् परदुःखकातरपरवेदनायामात्मोन्मादी आत्मविस्मृति-परश्च न द्वितीयोऽस्तीति सम्यक् प्रतिपद्यते ।

जागतिकनियमेन किमु संसारबन्धनपटीयस्या महाशक्तेर्महीयसीमायाविजृम्भनेन विपदि शोके मोहे च के न खलु प्रियविरह-विदूनमानसाः सामाजिकाः किंवा पांशूपबद्धकरचरणाः हालिकाः

अपि उच्चैरनुच्चैर्व्वा भृशं करुणमश्रु विमुच्य विलपन्ति ? किन्तु कविरयं यया यया दिशा येन येन भावेन च पाषाणग्रन्थयदारोदयच्च तथाविधान्यकविलिखितप्रबन्धेषु नूनं सुदुर्लभमदृष्टपूर्वञ्च । यथा जीवन्मुक्तस्य राजर्षेर्ज्जनकस्य मुखेन पालिततनयार्थे "हा हा पुत्रि" इत्यादिवागोपन्यासः । रामचन्द्रस्य च—

"हाहा देवि !! स्फुटति हृदयं स्रंसते देहबन्धः
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्ज्वलामि ।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥" इति

अन्यच्च सीताशोकोच्छ्वसितबाष्पनयनाया वनदेव्या वाक्येन किं नाम कुसुमपेलवमानसम् ? वज्रसारमपि कठिनं शुष्कं हृदयं शतधा विदीर्य्यते । तच्च—

"त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
त्वामेव—शान्तमथवा किमिहोत्तरेण ? ॥"

इत्यादिवाचा कवेः श्रीकण्ठस्य हृदयं सम्यगनुमातुं शक्यते । यज्जगत्सर्वस्वसारमयेण महासत्वेन परदुःखकातर्य्येण च तन्निर्म्मितपूर्वम् । येन प्रतिपदं प्रतिवर्णञ्च परदुःखकातरताप्रतिमूर्त्तिं परिगृह्य समभ्यनन्दयति अस्मानतिमात्रम् ।

परञ्च "वश्यवाचः कवेः काव्यम्" इति यत् कविना स्वयमेवोच्यते, तदन्वर्थ एवास्माभिस्तस्य काव्यत्रये पर्य्यालोक्यते । एकतः

सुललितपदमधुरां हितोपदेशीयामिव भाषाम्, अन्यत्र श्लेषबहुल-नैषधचरितस्य श्रुतिसुखदं पदकदम्बतुल्यम्; कुत्र वेद-वेदान्तो-पनिषदामर्थबहुलां दृढ़संस्कारविधायकां चिन्तापरिपूतां मार्ज्ज-नीयां भावुकभावनीयां भारतीसाम्याम्; कुतश्चिद्वा कादम्बर्य्या अर्थालङ्कारभूषितां शब्दवैचित्रमयीं वर्णशासनमाधुरिमामिव वाणीं समीच्य सर्व्वथा किङ्करिणीव वाक् तस्य वशगेति समर्थयते।

एवमपि नदी-पर्व्वतारामप्रस्रवणोपवनवर्णने, वनचारिणीनां मृगकरभकरिवधूनां प्रेमविह्वलनिर्ज्जनन्त्यविधौ, निविड़ारण्यपा-दपपंक्तीनां घोरगम्भीरौदार्य्ये, उद्भ्रान्तभावजनयित्रीणां विस्मय-करिगिरिगुहाचूड़ानां सौन्दर्य्ये च कवेर्य्यादृक् रचनाचातुर्य्यं स्वभा-वस्य च सर्व्वथा भावसाम्यमासाद्यते, तादृक् तस्य रचनां परि-हाय नान्यत्र क्वापि परिलक्ष्यते; एवं जीवानां हृदयभावाङ्कने प्रति-फलितदर्पणविम्ब इव तेषां मनोवृत्तिमवस्थाञ्च सूक्ष्मरूपेण परिज्ञाय कविना श्रीकण्ठेन आशायाः सुखदुःखयोः प्रेम्णो नैराश्यस्य च यत् यत् चित्रमकारि; तत् तत् तेषामिव चरमवर्णनम्। अपि न केवलं लोकानां हृदयं परिजानता तेन पशुपक्षिकीटपतङ्गानामपि चित्तोच्छ्वासं निःश्वासं प्रश्वासञ्चापि समवगम्य निरवशिष्टं तद्वर्णने समानायीति सामकानां प्रत्यावताञ्च हृदयम्।

परमासन्निह जगति बहवः कवयः, आसंश्च तेषां कविगुणाः, किन्तु भवभूतेस्तुल्यः कोऽपि कविः कविगुणेन शास्त्रप्रतिभया च युक्तो भारतभूमौ प्रादुर्भूतः किं नवेति वक्तुमलं स्मः।

—०००(*)०००—

## भवभूतिकालिदासयोः—

समालोचयन्ति काव्यरसरसिका यदभिज्ञानशकुन्तलमुत्तररामचरितं नाम नाटकद्वयं नाट्यनिवहेषु निरवद्यमिति। एतयोरुत्तररामचरितालोचनावसरे कालिदासकल्पितेन राज्ञा दुष्मन्तेन समं श्रीकण्ठपरिकल्पितस्य श्रीरामचन्द्रस्य तुल्यतेति तेषां परिकल्पना। एतयोर्नायकयोरुत्कर्षापकर्षसूक्ष्मातिसूक्ष्मविचारणे नोपपद्येत ईदृशी चिन्ता, यत् नायकगुणेन यथा यथा समुपस्थापितो राजा दुष्मन्तः श्रीमता कालिदासेन, न तथा श्रीरामचन्द्रमुपस्थापयितुं शशाक कविमुख्यस्तत्रभवान् श्रीकण्ठ इति।

केऽप्येवमेवचाहुः—यदभिज्ञानशकुन्तलापेक्षया भूयसा गुणनिवहेनालङ्कृतमुत्तररामचरितमिति, तथा च—

"अकिञ्चिदपि कुर्वाणः सौख्यैर्दुःख्यान्यपोहति।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः॥"

अपि च—"दलति हृदयं गाढोद्वेगं द्विधा न तु भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम्।
ज्वलयति तनमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिमर्मच्छेदी न कृन्तति जीवितम्॥"

इत्यादौ च कवेर्यदा भावगाम्भीर्यं सुभगा च रचनावली न तथा कालिदासस्य प्रबन्धेषु प्रतिपद्यते, यथाहि—

"वसने परिधूसरे वासना नियमक्षाममुखी धृतैकवेणिः।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्त्ति॥"

सुललितपदमधुरां हितोपदेशीयामिव भाषाम्, अन्यत्र श्लेषबहुल-नैषधचरितस्य श्रुतिसुखदं पदकदम्बतुल्यम्; कुत्र वेद-वेदान्तो-पनिषदामर्थबहुलां दृढ़संस्कारविधायकां चिन्तापरिपूतां मार्ज्ज-नीयां भावुकभावनीयां भारतीसाम्याम्; कुतश्चिद्वा कादम्बर्या अर्थालङ्कारभूषितां शब्दवैचित्र्यमयीं वर्णशासनमाधुरिमामिव वाणीं समीक्ष्य सर्व्वथा किङ्करिणीव वाक् तस्य वशगेति समर्थयते।

एवमपि नदी-पर्व्वतारामप्रस्रवणोपवनवर्णने, वनचारिणीनां मृगकरभकरिवधूनां प्रेमविह्वलनिर्ज्जननृत्यविधौ, निविड़ारण्यपा-दपपंक्तीनां घोरगम्भीरौदार्य्ये, उद्भ्रान्तभावजनयित्रीणां विस्मय-करिगिरिगुहाचूड़ानां सौन्दर्य्ये च कवेर्य्यादृक् रचनाचातुर्य्यं स्वभा-वस्य च सर्व्वथा भावसाम्यमासाद्यते, तादृक् तस्य रचनां परि-हाय नान्यत्र क्वापि परिलक्ष्यते; एवं जीवानां हृदयभावाङ्कने प्रति-फलितदर्पणबिम्ब इव तेषां मनोवृत्तिमवस्थाञ्च सूक्ष्मरूपेण परिज्ञाय कविना श्रीकण्ठेन आशायाः सुखदुःखयोः प्रेम्णो नैराश्यस्य च यत् यत् चित्रमकारि; तत् तत् तेषामेव चरमवर्णनम्। अपि न केवलं लोकानां हृदयं परिजानता तेन पशुपक्षिकीटपतङ्गानामपि चित्तोच्छ्वासं निःश्वासं प्रश्वासञ्चापि समवगम्य निरवशिष्टं तद्वर्णने समानायीति मामकानां प्रत्यावताञ्च हृदयम्।

परमासन्निह जगति बहवः कवयः, आसंश्च तेषां कविगुणाः, किन्तु भवभूतिस्तुल्यः कोऽपि कविः कविगुणेन शास्त्रप्रतिभया च युक्तो भारतभूमौ प्रादुर्भूतः किं नवेति वक्तुमलं स्मः।

—०००(*)०००—

## भवभूतिकालिदासयोः—

समालोचयन्ति काव्यरसरसिका यदभिज्ञानशकुन्तलमुत्तररामचरितं नाम नाटकद्वयं नाट्यनिवहेषु निरवद्यमिति। एतयोरुत्तररामचरितालोचनावसरे कालिदासकल्पितेन राज्ञा दुष्मन्तेन समं श्रीकण्ठपरिकल्पितस्य श्रीरामचन्द्रस्य तुल्यतेति तेषां परिकल्पना। एतयोर्नायकयोरुत्कर्षापकर्षसूक्ष्मातिसूक्ष्मविचारणे नोपपद्येत ईदृशी चिन्ता, यत् नायकगुणेन यथा यथा समुपस्थापितो राजा दुष्मन्तः श्रीमता कालिदासेन, न तथा श्रीरामचन्द्रमुपस्थापयितुं शशाक कविमुख्यस्तत्रभवान् श्रीकण्ठ इति।

केऽप्येवमेवञ्चाहुः—यदभिज्ञानशकुन्तलापेक्षया भूयसा गुणनिवहेनालङ्कृतमुत्तररामचरितमिति, तथा च—

"अकिञ्चिदपि कुर्व्वाणः सौख्यैर्दुःखान्यपोहति।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः॥"

अपि च—"दलति हृदयं गाढोद्वेगं द्विधा न तु भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम्।
ज्वलयति तनुमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्म्मच्छेदी न क्वन्तति जीवितम्॥"

इत्यादौ च कवेर्यदा भावगाम्भीर्य्यं सुभगा च रचनावली न तथा कालिदासस्य प्रबन्धेषु प्रतिपद्यते, यथाहि—

"वसने परिधूसरे वासना नियमक्षाममुखी धृतैकवेणिः।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्त्ति॥"

इत्यादि कालिदासकल्पितविरहवेदनोपवर्णनस्य—

"परिपाण्डु दुर्बलकपोलसुन्दरम्
दधती विलोलकवरीकमाननम्।
करुणस्य मूर्त्तिरथवा शरीरिणी
विरहव्यथेव वनमेति जानकी॥"

इत्यादि भवभूतिपरिकल्पितविरहवर्णनापेक्षया निकृष्टतेति। तथा च 'वसने परिधूसरे' इत्यादिना कविर्यथार्थमेवार्थं वर्णितवान्, न तत्रालङ्कारचातुर्य्यम्, नापि वा कार्य्यदिशा मनोहारित्वम्। 'करुणस्य मूर्त्तिरथवा शरीरिणो विरहव्यथेव वनमेति जानकी' इत्यनेन च सीताया विषण्णता पवित्रता कथञ्चिदलौकिकता च प्रतीयते, तत्तत्स्थानीयरचनासु च कवीनामादर्शभूता प्रति-विषयमेव कविश्रीकण्ठस्यास्ते नवीना प्रतिमा। कालिदासस्य तु प्रायः प्रतिविषयं रचनासु तारतम्येन न दृश्यते। शृङ्गाररस-विकाशावसरे च अश्लीलतादिदोषदूषणम्। केवलं सरलया दिशा भावं विकाशयितुमतिमात्रं शक्तिमाधत्ते श्रीमान् कालिदासः। अपि च एवमिवमपि ते विचारयन्ति, यत् भवभूतिः यत्र यत्र यया यया दिशा भावनिवहं प्रकाशयितुं यतते, तत्र तत्र तथैव निष्पाद्य प्रणयन्ति मानसमतिमात्रम्; तथा च उत्तररामचरितस्य प्रथमे राम-चन्द्रस्य सीतायामत्यर्थः प्रणयः, उत्तरतः तस्या विरहेण विमना-यमानत्वम्, स्थाने वीरवृत्तप्रकाशनम्, वनदेवताया अपि वासन्त्याः सीतार्थं असामान्यविसादविकाशनम्, बालानामपि कुशलवचन्द्र-केतूनां क्षत्रजनोचितवीररसातिरेकनिबन्ध इति।

न चैतत्तेषां वचः प्रमाणयितुं वयं किञ्चनप्रमाणमुपलभामहे युक्तिविरहितः प्रवादो न श्रद्धेय इति नियमेनैव तां वाचं शिथिलतया कल्पयामः। तथा च प्रथमतः स्थूलतमेयं वार्त्ता पुराणकिंवदन्ति च 'काव्येषु माघः कविकालिदासः।'

"कालिदासकविता नवं वयः माहिषं दधि सशर्करं पयः।
एनमांसमबला च कोमला सम्भवन्तु मम जन्मजन्मनि॥"

इति आबालवृद्धवनिताभ्यः साधारणानामेव हृदये जनयति काञ्चिदनन्यजननीयामानन्दधाराम्। सरलभाषानिबन्धनेन च तस्य जायते सर्व्वेषामेव काव्यरसाविर्भूतिर्म्मानसेषु। 'वसने परिधसरे' इत्यादि कालिदासवर्णनामुपलभ्य वयं सतीप्रधानाया एव नियमपालनमधिगच्छामः। समाजशिक्षैकप्रवणस्य महाकवेः कालिदासस्य रचनाभिः सरलपदनिबद्धाभिः सरलभावनिवहनिरन्तराभिश्च यथा जायते सुतरां समाजशिक्षा, न तथा गभीरकल्पनानिपुणस्य कवेर्भवभूतेर्निबन्धात्। तथा च यदि कवीनां वचनार्थमधिगन्तुं प्रथमत एव जायते महान् प्रयासस्तर्हि उत्तरतस्तद्गतनिरतिशयापि भावधारा न सुखाय प्रभवति सामाजिकानाम्।

शाकुन्तले दुष्मन्तस्य तथात्वकल्पनेन समाजशिक्षायां सर्व्वोपरि विजयते कविवरः श्रीमान् कालिदासः। तथा च प्रथमत एव कान्तारे मृगयाप्रसक्तं दुष्मन्तम्, उत्तरतः प्रशान्ततपोवनप्रवेशेन प्रशान्तमानसं शकुन्तलायाञ्चातितरामनुरक्तं परतः शकुन्तलोन्मुखमानसमपि तापसानां यज्ञबाधानिवारणोद्यतं विस्मृतशकुन्तलञ्च शकुन्तलोपस्थानेन तस्यां सुनीतिप्रयुञ्जन्तं परिहरन्तं पुनरुद्वु-

इत्यादि कालिदासकल्पितविरहवेदनोपवर्णनस्य—

"परिपाण्डु दुर्ब्बलकपोलसुन्दरम्
दधती विलोलकवरीकमाननम्।
करुणस्य मूर्त्तिरथवा शरीरिणी
विरहव्यथेव वनमेति जानकी ॥"

इत्यादि भवभूतिपरिकल्पितविरहवर्णनापेक्षया निकृष्टतेति। तथा च 'वसने परिधूसरे' इत्यादिना कविर्यथार्थमेवार्थं वर्णितवान्, न तत्रालङ्कारचातुर्य्यम्, नापि वा कार्य्यदिशा मनोहारित्वम्। 'करुणस्य मूर्त्तिरथवा शरीरिणी विरहव्यथेव वनमेति जानकी' इत्यनेन च सीताया विषण्णता पवित्रता कथञ्चिदलौकिकता च प्रतीयते, तत्तत्स्थानीयरचनासु च कवीनामादर्शभूता प्रति-विषयमेव कविश्रीकण्ठस्यास्ते नवीना प्रतिमा। कालिदासस्य तु प्रायः प्रतिविषयं रचनासु तारतम्येन न दृश्यते। शृङ्गाररस-विकाशावसरे च अश्लीलतादिदोषदूषणम्। केवलं सरलया दिशा भावं विकाशयितुमतिमात्रं शक्तिमाधत्ते श्रीमान् कालिदासः। अपि च एवमेवमपि ते विचारयन्ति, यत् भवभूतिः यत्र यत्र यया यया दिशा भावनिवहं प्रकाशयितुं यतते, तत्र तत्र तथैव निष्पाद्य प्रणयन्ति मानसमतिमात्रम्; तथा च उत्तररामचरितस्य प्रथमे राम-चन्द्रस्य सीतायामत्यर्थः प्रणयः, उत्तरतः तस्या विरहेण विमना-यमानत्वम्, स्थाने वीरवृत्तप्रकाशनम्, वनदेवताया अपि वासन्त्याः सीतार्थं असामान्यविषादविकाशनम्, बालानामपि कुशलवचन्द्र-केतूनां चत्रजनोचितवीररसातिरेकनिबन्ध इति।

न चैतत्तेषां वचः प्रमाणयितुं वयं किञ्चनप्रमाणमुपलभामहे युक्तिविरहितः प्रवादो न श्रद्धेय इति नियमेनैव तां वाचं शिथिलतया कल्पयामः। तथा च प्रथमतः स्थूलतमेयं वार्त्ता पुराणकिंवदन्ति च 'काव्येषु माघः कविकालिदासः।'

"कालिदासकविता नवं वयः माहिषं दधि सशर्करं पयः।
एनमांसमबला च कोमला सम्भवन्तु मम जन्मजन्मनि॥"

इति आबालवृद्धवनिताभ्यः साधारणानामिव हृदये जनयति काञ्चिदनन्यजननीयामानन्दधाराम्। सरलभाषानिबन्धनेन च तस्य जायते सर्व्वेषामिव काव्यरसाविर्भूतिर्म्मानसेषु। 'वसने परिधसरे' इत्यादि कालिदासवर्णनामुपलभ्य वयं सतीप्रधानाया एव नियमपालनमधिगच्छामः। समाजशिक्षैकप्रवणस्य महाकवेः कालिदासस्य रचनाभिः सरलपदनिबद्धाभिः सरलभावनिवहनिरन्तराभिश्च यथा जायते सुतरां समाजशिक्षा, न तथा गभीरकल्पनानिपुणस्य कवेर्भवभूतेर्निबन्धात्। तथा च यदि कवीनां वचनार्थमधिगन्तुं प्रथमत एव जायते महान् प्रयासस्तर्हि उत्तरतस्तद्गतनिरतिशयापि भावधारा न सुखाय प्रभवति सामाजिकानाम्।

शाकुन्तले दुष्मन्तस्य तथात्वकल्पनेन समाजशिक्षायां सर्व्वोपरि विजयते कविवरः श्रीमान् कालिदासः। तथा च प्रथमत एव कान्तारे मृगयाप्रसक्तं दुष्मन्तम्, उत्तरतः प्रशान्ततपोवनप्रवेशेन प्रशान्तमानसं शकुन्तलायाञ्चातितरामनुरक्तं परतः शकुन्तलोन्मुखमानसमपि तापसानां यज्ञबाधानिवारणोद्यतं विस्मृतशकुन्तलञ्च शकुन्तलोपस्थानेन तस्यां सुनीतिप्रयुञ्जन्तं परिहरन्तं पुनरुद्बुद्ध-

स्मृतेश्चाङ्गुरीयकसमागमेनाधैर्यम् शकुन्तलार्थमनुतप्तं विरह-विदूनमानसमपि मातलिना विदूषकस्य निपीड़ने तत्प्रतिकाराय यतमानम्, ततो दानवपरिध्वंसेन प्रख्यातविक्रमं स्वर्गावतरण-काले संप्राप्तशकुन्तलं शान्तञ्च संलभेमहि। अतएव शकुन्तला-विरहावस्थायां यथा तस्य धीरावस्था यथा च कर्त्तव्यनिष्ठता प्रति-भासते, न तथाभवितुमर्हति साधारणस्य यथा—

"येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना।
स स पापाद्दृते तासां दुष्मन्त इति घुष्यताम्॥"

'किं नाम ममापि सत्त्वैरभिभूयन्ते गृहाः' इत्यादिस्थलेषु तथा प्रतीतिः। यथा यथा च शकुन्तलार्थं शोकप्रकाशः समजनि स च धीरतां वा नीतिकलां वा नाक्रामतिस्म, तथा च—

"इतः प्रत्यादेशात् स्वजनमनुगन्तुं व्यवसिता
स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे।
पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती
मयि क्रूरे यत्तत् सविषमिव शल्यं दहति माम्॥"

अन्यच्च—

"अस्मात् परं वत यथाश्रुतिसम्भृतानि
को नः कुले निवपनानि करिष्यतीति।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुशेषमुदकं पितरः पिबन्ति॥" इत्यादिषु

च परिव्यक्तम्। अपि च दुष्मन्तः यदा यत्र प्रवर्त्तते तदा तदेक-कर्त्तव्यविषयं स्मरतीति कालिदासनिबन्धे। भवभूतिपरिकल्पितो

रामचन्द्रोऽपि सविशेषमेव राजवृत्तिमव्याहतां परिपालयति, तस्य च वृत्तं साधारणानामेव शिक्षणार्हं, तच्च तस्यैव निबन्धतः स्फुटमेव प्रतिभाति। रामचन्द्रः सीताविरहेण नितान्तव्याकुलहृदयो यदेव कर्त्तुं व्रजति, यदेवमभिकाङ्क्षति तत्रैव समुपतिष्ठते सीताविरहगुरुका वेदना, कर्त्तव्यसंसाधने वा नियतकार्य्यानुशीलने वा सर्वत्रैव तस्य सीतास्मृतिः। तथा च शम्बूकसमाक्रान्तं ब्राह्मणदारकं परिरक्षितुकामो राजवृत्त्या यदा कानने समुपतस्थे रामचन्द्रः, तदापि असमाहितकर्त्तव्य एव कर्त्तव्यसाधनोद्यमे शस्त्रप्रयोगावसरे सीताविरहवेदनासमाकुलितत्वं समालम्बते। प्रतिभासते चात्यर्थं तृतीयाङ्के रमणीजनस्यैव प्रियजनविरहेण विलापो रामचन्द्रस्य। तथाहि—

"रे हस्त दक्षिण, मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम्।
रामस्य गात्रमसि दुर्वहगर्भखिन्नसीता-
विवासनपटोः करुणा कुतस्ते ? ॥"

इत्यादिश्लोके शूद्रमुनौ कृपाणक्षेपणस्यापि वीरवृत्तस्य, सुतरां सीताविरहवेदनावार्त्तासमाश्लिष्टतया रामस्य नायकगुणापकर्षः। तथाहि दुष्मन्तः तत्र तत्र नायकगुणानामिव मूर्त्तिपरिग्रहः प्रकर्षमादधाति बहुधा, अयञ्च गाम्भीर्य्यपरिहीणचेता इव प्रतीयमानस्तरलहृदयतया तस्मादङ्गीकरोति गुणापकर्षं, ततो दुष्मन्तचरिताङ्कने कालिदासः श्रीरामचन्द्रचरितरचयितुर्भवभूतितः प्रकृष्ट इति किमस्ति वक्तव्यम्, तेन च विजयते भवभूतिकल्पनातो महा-

महिम्नो महाकवेः कल्पना कालिदासस्य। तथा च कालिदासः सरलया भाषया सरलेन च भावनिवहेन साधारणानामिव हृदयेषु श्रीकण्ठात् प्रतिभासते समुत्कर्षेण। केऽप्येवमपि च समालोचयन्ति यत् श्रीकण्ठस्य चित्रपरिदर्शनकल्पना छायाङ्कस्य नवीनकल्पना कालिदासस्यैव मिश्रकेशीकल्पनां शकुन्तलाचित्रपरिदर्शनञ्चानुकृत्य विस्तरेण विवृत्तेति कुशलवयोश्चन्द्रकेतुश्च वीरवृत्तप्रकाशः, सुतरां बालकानां सर्वदमनस्यावस्थामनुकरोतीति। यतः कालिदासो हि षष्ठशताब्द्यां प्रादुर्भूत इति पुरातत्त्वान्वेषिणां मतम्। श्रीकण्ठस्तु अष्टमशताब्दीयः, सुतरां तेन जायते कालिदासतः श्रीकण्ठकवेर-पकृष्टता, काव्यकलासु आविष्कृते पथि शक्नुवन्ति सर्व्वं एव प्रयातं, स एव तत्र सुदुर्लभत्वमाधत्ते यो नूतनं मार्गमाविष्करो-तीत्यल्पवाचां परिशेषः।

—०( * )०—

## सीताशकुन्तलयोः—

सीता नाम भारतीयानामनन्यसाधारणं परमाद्भुतमतिहृद्यं वस्तु। तादृशी रमणीकुलललामभूतातिपेषला कुलबालाजन-मभिलभ्य नाद्यापि पुनाति काऽमप्यात्मनो जातभूमिम्। न प्रख्यापयति च सेव कदापि कामिनी परिजनेषु कर्त्तव्यम्। रम-णीषु विदधती दिक्तो दिगन्तरं देशतो देशान्तरं वा पतिभक्तिम्।

या हिमूर्त्तिमतीव सकलसद्वृत्तिः स्वच्छतमेव गङ्गोत्तरीय-सलिलधारा, विग्रहवतीव पुण्यकला, वपुष्मतीव मन्दारकुसुम-

सौरभपरम्परा, निर्म्मितेव सुकुमारतया परिहृता च कर्कसभावेन। ग्रथितेवाकुटिलतया, समाराधितेव निखिलसद्गुणधारया। यैवा-खिलकर्त्तव्यकर्म्मैकायनीभूतं पतिमिव मर्म्मसमालम्बनं मन्यमाना तदनुसरणमेव सकलकर्त्तव्यादधिकतममवबुद्धतेस्म। या हि चरित्रे वा सरलतायां वा कोमलतायां वा समाजगाम दृष्टान्ततां कुलवधू-नामिह जगति। पुराणकथासु तस्या एव पुण्यवार्त्ता प्रस्थापयति हृदयमलं पुण्यतोया जाह्नवीव सहृदयानाम्। जनश्रुतिषु तस्या एव चरित्रपद्धतिः समुपदिशति साधुविशुद्धं चरित्रं लोकान्। समाज-चिन्तासु च तस्या एव पातिव्रत्यं संयमयति कलुषविषयात् कामिनीसमूहान्। 'कं' बहुना तस्याः अश्रुतपूर्व्वा गुरुजनेषु भक्तिः, वयस्यासु प्रेमप्रवणता, नीचजनेषु दया, पत्यौ प्रीतिश्च केष सहृदयानां न प्रमोदयन्ति मानसमतिमात्रं, न परिलोकयामास तस्या विरक्तमानसं कश्चित् सुखेषु वा दुःखेषु वा कथञ्चनापूर्व्व-भावसमाराधितान्तःकरणा सा धैर्य्यमयीव अवस्थानुकारिणी च समवर्त्तत। तस्याः सत्त्वगुणमयं मानसं संसाधयति सकलहृदयेषु सात्त्विकभावम्। निनरां वनदेवतापि वासन्ती तस्यामनुरक्ता जातेति कविः श्रीकण्ठस्य वाक्यतः स्फुटमेवावगम्यते। सा हि वासन्ती देवतानां सकलेषु समानभावमयी प्रीतिरिति नियमेनापि यदत्यर्थं सीतायामनुरक्ता, तत्र हि तस्या गुणातिरेक एव हेतुः तदर्थमेव तस्या विलापः, तथा धोरस्यापि रामस्य तामुद्दिश्य नारी-जनस्यैव रोदनातिरेकः, प्रजानां तत्र एकान्तानुरागः, मुनिकुल-प्रधानानामपि वशिष्ठादीनां तत्र देवीभावसंस्थापनम् इत्यादिबहु-

त्वमेवास्ति सतीकुलललामभूतायाः सीतादेव्याः गुणसंस्कारगौरवम्। प्रतिपादितं तावदुत्तररामचरिते कविकुलकुशलिना श्रीमता श्रीकण्ठेन, यन्नारीकुलेषु राघवकुललक्ष्मीः सीतैव दृष्टान्तभूतेति, तथा च प्रथमत एव वैदेह्याश्चरित्रशुद्धिप्रकाशकं वाक्यम्—

देव्यामपि हि वैदेह्यां सापवादो यतो जनः।
रक्षोगृहस्थितिर्मूलमग्निशुद्धौ त्वनिश्चयः॥" इति

ततः सीताया रामेण सह परमस्निग्धभाव उत्तरतः स्वजन-विरहविदूना सीता रामोपदेशमुपश्रुत्य "जाणामि अज्जउत्त, जानामि" इत्यादिसन्दर्भेण रामान्तिके अतिमात्रं सरलतां प्रकट-यति स्म। वशिष्ठादेशस्य स्वीकारावसरे यदा—

"रामः—स्नेहं दयाञ्च सौख्यञ्च यदि वा जानकीमपि।
आराधनाय लोकानां मुञ्चतो नास्ति मे व्यथा॥" इति प्राह,
ततश्च—

"सीता—अदो ज्जेव राहवकुलधुरन्धरो अज्जउत्तो" इति।
न चैषा साधारणी वाणी, न चानन्यसाधारणं महत्त्वं, यत् स्वामिनः स्वपरित्यागसङ्कल्पमाकर्ण्यापि वैदेह्यास्तादृशी वचनप्रवृत्तिः। अक-ठोरता च तस्या हृदयस्य लक्ष्मणकथायां प्रवर्त्तमानायाम्। यथा—

"लक्ष्मणः—एषा पञ्चवट्यां शूर्पणखा।
सीता—हा! अज्जउत्त, एत्तिअं ज्जेव दंसणं" इति

ख्यातमपि पूर्वं वृत्तं प्रत्यक्षवत् समवलोक्य विक्लवग्रस्ता वैदेही उन्मनायितेव वेपथुमती सञ्जाता। ततश्च रामेण 'चित्रमेतत्' इति वादेन सीतायाः परिसान्त्वनम्। प्रणयविकाशोऽप्यस्या अत्यर्थमेव,

तथाहि—

"सीता—अज्जउत्त, तुम्हेहिं वि तहिं गन्तव्वं ।" इति

आसक्तिविषयमपि तपोवनं रामविरहेण सीता न सुखजनकमनुभवति। रामेण समं सा काननेऽपि सौधाधिवाससुखं मन्यते। रामः सीतां निर्दोषामपि अग्निपरिशुद्धामपि सकलगुणशालिनीमपि विसर्जयामास केवलं प्रजारञ्जनार्थमेवालीकलोकापवाददूषितकान्तारे। सा चेयं तथावृत्तान्तेनापि नाराधयामास लेशतोऽपि पत्यौ विरक्तिम्। परं पूर्व्वापेक्षया विरहेण विमलीकृत इव प्रेमसंवादः समधिचकार तस्या हृदयकेन्द्रम्, प्रतिक्षणं प्रतिवचनञ्च रामार्थं विलापः, प्रतिपदञ्च रामार्थे विषमता, रामस्य क्षणं दर्शनेनापि सुधास्नानतृप्तिमनुमन्यते। तथा च छायाङ्कोपसंहारे तस्य साकल्येन प्रमाणम्। यथा—

"तमसा—कथं वा गम्यते ? यस्यास्तव—

प्रत्युप्तस्येव दयिते तृष्णादीर्घस्य चक्षुषः।
मर्मच्छेदपरैर्यत्नैराकर्षो न समाप्यते ॥ इति

सीता—णमो णमो अपूव्वपुण्णजणिददंसणाणं अज्जउत्तचरणकमलाणं [ इति मूर्च्छति ]।"

तमसया नितान्तमनुरुद्धापि सीता चेष्टमानापि नार्हति प्रतिनिवर्त्तयितुं दृष्टिम्। सन्ति कानने हृद्यान्यपि गिरिनिर्झरादिमनोसुग्धकराणि श्यामविटपादीन्यसंख्यानि वस्तूनि तत् सर्वमेव श्रीरामचन्द्रविरहेण लावण्यहीनमवगच्छति। न कुत्रापि शान्तिः प्रसरति सीतादेव्याः। सर्वमेवाशान्तिजननं, केवलं शान्तिमयं

प्रमोदमयं सद्‌वृत्तिमयञ्च श्रीरामचन्द्रदर्शनमिति निश्चिन्वन्ती कथमिव प्रतिनिवर्त्तयितुं दृष्टिं रामचन्द्रात् ।

कालिदासपरिकल्पितशकुन्तलापेक्षयापि नायिकागुणैर्वैदेही प्रकृष्टेति समालोचनावसरे प्रायेणाङ्गीक्रियते विद्वद्भिः । तथा च दुष्मन्तपुरमुपस्थिता हि शकुन्तला राज्ञा विस्मृतिसूचकं वाक्यचयमुपश्रुत्य रोषातिशयदूषिता प्राह—"अणज्ज, अत्तणो हिअआणुमाणेण किल सव्वं पेक्खसि ?"

तथा गुणवानपि स्वामिपदे समधिष्ठितोऽपि राजा दुष्मन्तः शकुन्तलया "अणज्ज" इत्यादिधादेन यत् भर्त्सितः, स एव तस्यावैदेह्यपेक्षया अपकर्ष इति मन्यामहे । अपरेषु विषयेषु प्रायः सौसादृश्यं सीताशकुन्तलयोः, किन्तु चरित्रांशे अयमसौ तयोर्महान् प्रभेद इति ।

सीता नाम जगदादर्शभूता पतिव्रता गुणवती नारीति नाधिकवचनावसरः । सा रामे ईदृगेव विमुग्धा, यत् रामेण समुत्पादितं कष्टकरमपि विषयं न मन्यते कष्टाय, परं रामदर्शनेन निखिलकष्टमपि ब्रह्मानन्दाय परिकल्पते । न जातु श्रोतुमभिशक्नोति रामस्य निन्दालेशं, वज्रपातमिव हि तत् तस्याः तुदति श्रवणयुगलं, व्यथयति च नरकज्वालेव तस्य कष्टलवः । तथा हि—

"वासन्ती—अयि देव, किमिति दारुणो दारुणः खलुसि ?
सीता—सहि वासन्दि, किं तुमं वि एव्वं वादिणी, पिआरहो सव्वस्स अज्जउत्तो विसेसदो मम पिअसहीए ।"

अपि च—

"वासन्ती—तत् किमकार्य्यमनुष्ठितं देवेन ?

सीता—सहि वासन्दि, विरम विरम ।"

अन्यच्च—

"वासन्ती—अयि कठोर, यशः किल ते प्रियं
किमयशो ननु घोरमतः परम् ।
किमभवद्विपिने हरिणीदृशः
कथय नाथ कथं बत मन्यसे ॥" इति

"सीता—तुमं जेव्व सहि वासन्दि, दारुणा कठोरा अ जा
एव्वं विलवन्ती पदीवेसि अज्जउत्तं ।" इति

अन्यत्र रामसीतयोरनन्यसाधारणदाम्पत्यभावः, यथा—

"प्रकृत्यैव प्रिया सीता रामस्यासीन्महात्मनः ।
तथैव रामः सीतायाः प्राणेभ्योऽपि प्रियोऽभवत् ॥" इति

अहो! धन्या सीता!! धन्यञ्च तस्याः पातिव्रत्यं, मानवीनामिव न खलु सम्भवति धरण्याम् । पातिव्रत्यशिक्षार्थमेव तस्याः जनन-परिग्रहः, जननेन च धन्योऽयं पुण्यमयो भारतवर्षः, वयञ्च साति-शया धन्याः गौरविताश्च, इत्यस्तु तत्सम्वादसंवाहिनी सुविशुद्धा भारती स्वल्पपरिणामिनीति दिक् ।

०००—(००)—०००

## काव्योपेक्षिता—

[ प्रियंवदानसूये पत्रलेखा च ]

संस्कृतभाषापरिसंशीलयतां सततमेव नयनपथवर्त्तिन्यस्तिस्र-स्तपस्विन्य:। अभिज्ञानशकुन्तले प्रियंवदानसूये, कादम्बर्यां पत्रलेखा च। एतासु प्रियंवदानसूये पतिगृहं गच्छन्त्या शकुन्तलया पथि प्रतिनिवृत्त्यमाने एव रुदत्यौ प्रत्यावृत्ते, न पुनर्नाटकमध्ये तयो: प्रवेश:। अपरा किल संस्कृतसाहित्ये मन्दभाग्या त्यक्तादरा पत्रलेखा। एतासु असन्महाकवे: कालिदासस्य परिकल्पिते प्रियंवदानसूये प्रथमं समाकलय्य प्रियसुहृभ्यो यत्किञ्चिदुपहारी क्रियते।

दृश्यते हि काव्यजगति नाट्यकलासंसृष्टौ न सकलानां पात्राणां समानोऽधिकार:। दारुण: खलु कविरात्मनो नायकस्य नायिकायाश्च कृते कियतीर्नामाऽन्यया: प्रतिमा विरचयन् निर्दयमेव भागिरथीतरङ्गायिते प्रबले स्रोतसि विससर्ज। तत्र खलु यथाय विचार्य शेषं परिकल्पते कवि:।

अपि नाम तेषां तत्रैव परिशेष इति मामकानां हृदयम्। राजसंसदुपस्थितौ समुद्दीप्तरोषौ कण्वशिष्यौ शार्ङ्गरवशारद्वतौ अश्रुमुखी जरती च गौतमी प्रत्यावृत्त्य समुत्सुकोत्कण्ठिताभ्यां यदा तावन्तं राजद्वारवृत्तान्तं न्यवेदन्, किं नाम न भवति तयोस्तदानीमघटतेति मूलनाटकस्य सर्वथैवानावश्यकम्। किन्तु तावतैव किं तयोस्तावत्यप्रमेया दु:खवेदना तत्रैवोपाशाम्यत्। विनापि छन्दो विनापि

च भाषां नैषा तयोर्दुःखवेदनाचिरायास्मच्चेतःसु समुद्भ्राम्यति। काव्यं नामेदं हीरकमिवातिकठिनम्। यदा चिन्तयन् पश्यामि— किमिव कियद्वा प्रियंवदानसूये अभूतां शकुन्तलायाः, तदा तस्याः खलु कण्वपुत्र्याः परमदुःखसमये तयोः सख्योः सर्वथानावश्यके-नापवादेन निष्क्रियो नाम भवेदपि काव्यस्य न्यायविचारितः। परन्तु तन्निरतिशयं निष्ठुरम्। शकुन्तलायाः सुखसौन्दर्य्यगौरवा-भिवर्द्धनायैव ते इमे लावण्यप्रतिमे स्वसर्वस्वेन तामावेष्टितवत्यौ। यदा तास्तिस्रः सहचर्य्यः सेचनघटैरकालविकशिताया नवमालत्या मूले सम्मिलिताः तदा न केवलमेको दुष्मन्त एवाप्रियत शकुन्तलायाम्।

के नाम तदानीं नर्म्मकौतुकैर्नवयौवनविलोलमाधुर्य्यैश्च शकु-न्तलायास्तादृशं भावं समपूरयताम्? इमे एव तापस्यौ सहचर्य्यौ। स्वयं शकुन्तला आत्मन एकतृतीयोंऽशः। अपरावंशौ प्रियंवदान-सूये ते एव भूयसा तं प्रेमालापमपूरयताम्। तृतीयेऽङ्के यत्र सह निःसहायया शकुन्तलया वर्त्तमानस्य दुष्मन्तस्य प्रणयवैयाकुली वर्णिता, कामं कविस्तत्र हीनबल इव कथमपि गीतसीमानीय स्वस्थोऽभवत्। यतो याभ्यामाव्रियमाणा शकुन्तला स्वपूर्त्तिमलभत, न ते तदानीं तत्रावर्त्तेताम्, वृन्तविच्युतस्य कुसुमस्योपरि दिवा-करप्रखरालोको न सहनीयो भवति, वृन्तपल्लवयोरीषदन्तरालेन विना स आलोको न तत्र तथा कोमलेन भावेन निपतति।

नाटकस्य तेषु खलु कतिपयेषु पत्रेषु सखीविरहिता शकुन्तला तावदतिस्पष्टं सर्वथानावृतभावेन निपतति नयनयोर्यथा सम्यगव-

लोकयतां संकोच इव कश्चित् समुदेति ।

अथ आर्य्याया गीतस्याः सहसाविर्भावेण सर्वं एव पाठकाश्चेतसि शान्तिमिव काञ्चिल्लभन्ते । मन्यामहे, चराचरपालको दुष्मन्तो यत् राजसभायां शकुन्तलां न प्रत्यभिज्ञासीत्, तत्र प्रधानं कारणं शकुन्तलया सह प्रियंवदानसूये नाभवताम् । एकतस्तपोवनात् बहिर्देशः, अन्यतश्च सा विकलेति सम्भवेदपि प्रत्यभिज्ञानं दुष्कर-मिति । आपृच्छ्यगतायां शकुन्तलायां शून्यं तपोवनं समागतयो-स्तयोः किं नाम शैशवसहचरीवियोग एवैको विषयो दुःखस्या-भवत् । न तं वियोगं विना तपोवनस्यान्यत् किञ्चित्तदानीं पर्य्यवर्त्तत ।

अहो ! भुक्तमाभ्यां बोधद्रुमस्य फलम्, विज्ञातञ्च यदासीद-विज्ञातम् । तच्च न खलु काव्यनिहितायाः कल्पनोद्भावितायाः नायिकायाश्चारित्रपाठेन, अपि तु स्वकीयायाः प्रियसहचर्य्या हृदय-मधेऽऽवतरणेन, किं नेतः प्रभृति अन्तरान्तरा विस्मरितां ते आल-वालसलिलसेचनम् । अपि नेदानीं ते अन्तरान्तरा शुष्कपत्रसञ्च-लनस्वनेन चकितान्तःकरणे अशोकान्तरालस्थितस्य कस्याप्यागन्तु-कस्योपस्थितिमाशङ्कयाताम् । अपि ताम ते मृगशिशवः पुनरपि तादृशमेव पूर्णमादरं लभेरन् । तस्मिन् खलु तपोवने सांप्रतं प्रियंवदाया अनसूयायाश्च जीवनकथामन्विष्यामः । न ते प्रति-विम्बस्वरूपे येन सह शकुन्तलयैव एकस्मात् दिगन्तादपरस्मिन् भवेत्तयोस्तिरोभावः ।

अस्ति तयोर्जीवनम्, अस्ति च मूर्त्तिः, रचितस्य काव्यस्य

बहिर्भागे अभिनीतस्य च रूपकस्य नेपथ्यभूमौ जाता तयोर्वृद्धिः। अतिपिनद्धेनापि वल्कलेन तदानीं तयोस्तारुण्यभार आवद्धुं शक्यते। इदानीमनयोस्तादृशस्य स्मितमाधुर्य्यस्योपरि प्रत्यग्रवर्षाम्बरतले जलधरमालेव समुत्पन्ना काचिदस्फुगम्भीरा च्छाया। इदानीं काचिदेकैकस्मिन् दिवसे अनन्यमानसयोः शून्यहृदययोरनयोरुटजप्राङ्गणात् अकृतसत्कारा अतिथयः प्रतिनिवर्त्तन्ते। वयमपि च हन्त! प्रतिनिवृत्य शून्यहृदये अपरायाः सविधे संप्रति समुपगच्छामः।

कादम्बरी कथायाः यस्मिन् स्थाने समागता पत्रलेखा विषमञ्च तत्स्थानमदृश्यत, येन किञ्चित्ततः इतः पदक्षेपणेनैव सम्भवति विपत्तिः। अस्मिन्नाख्याने पत्रलेखा यादृशेन सुकोमलेन सम्बन्धेनावद्धा नैतादृशो दृष्टोऽन्यत्र कुत्रचिदपि साहित्ये, सत्यमेवं कविरतिलीलया सरलेन चेतसा ईदृशमपूर्वं सम्बन्धवन्धनमवतारयत्। न क्वाप्यस्य तन्तोः स्वल्पमपि संवृत्त तादृशमाकर्षणं येन येन क्षणमपि तस्य च्छेदशङ्का आपद्येत। युवराजश्चन्द्रापीड़ो यदापरध्ययनं समाप्य प्रसादं प्रत्यावृत्तः, तदानीं कस्मिंश्चिदहनि प्रभातसमये कैलासो नाम कश्चित् कञ्चुकी तद्गृहं प्रविष्टः।

आसीत् किल तदा तत् पश्चात् काचिदनतियौवना कन्यका। अस्याः शिरसीन्द्रगोपकीटवत् रक्ताम्बरेणावगुण्ठनम्, ललाटे चन्दनतिलकः, मध्ये च कनकमेखला। सेऽयं तरुणी लावण्यप्रभाप्रभावेन परिपूर्य्य स सकलभवनम्, क्वणितमणिनूपुराकलितेन चरणेन कञ्चुकिनमन्वगच्छत्।

स एव कञ्चुकी प्रणम्य क्षितितलनिहितदक्षिणकरो व्यजिज्ञपत्—'कुमार, भवतो माता महादेवी विलासवती विज्ञापयति—कन्येयं पराजितस्य कुलतेश्वरस्य दुहिता बन्दीभूता अस्याः नाम पत्रलेखा। तामिनां राजकन्यामियन्तं कालं दुहितृनिर्विशेषेणाहमपालयम्। सांप्रतमेषा तव ताम्बूलकरङ्कवाहिनी भवत्विति प्रहिणोमि। नेयं साधारणपरिजनवद्गणनीया, अपि तु बालिकेव लालनीया, स्वचित्तवृत्तिरिव निवारणीया चापलात्, शिष्येव दर्शनीया, सुहृदिव च निखिलेषु विस्रम्भव्यापारेष्वन्तरङ्गीकरणीया। किञ्च तादृशेषु कर्मसु इयं कल्याणी नियोजनीया, यथेयं तवातिचिरपरिचारिका भवेदिति।' एवं कथयति कैलासे पत्रलेखा तं समुचितं प्राणंसीत्, सोऽपि चन्द्रापीड़ो निर्निमिषेण लोचनेन तां सुचिरं निरीक्ष्यावादीत्—'यथा-म्बाज्ञापयति।' इति उक्त्वा चेदं दूतं प्रतिनिवर्त्तयामास।

पत्रलेखा न खलु पत्नी, नवा प्रणयिनी, नापि वा किङ्करी, अपि तु पुरुषस्य सहचरी। सोऽयमपूर्व्वो भावः समुद्रयोर्म्मध्यवर्त्ती सैकततट इव कथमिवायं रक्षेत? तरुणयोरन्योन्यं प्रति यदिदं नवयौवनस्य चिरन्तनं प्रबलमाकर्षणं, तत् खलूभयतोऽपि संक्षीणं सेतुमिव किमिति सर्वथा न क्षिणोति न वा लङ्घयति। कविस्तु तामनाथां राजकन्यां चिराय एवास्मिन् आश्रयेऽवासयत्। इतः खलु मर्य्यादाया रेखामात्रेऽपि बहिर्देशे जातुं तामेष आचकर्ष। दुर्भागधेयां बन्दिकन्यां प्रति कवेरितोऽपि का नामोपेक्षा सम्भवति? अतिसूक्ष्मायाः यवनिकाया अन्तरालगतापि सा आत्मनः

स्वाभाविकं स्थानमभ्यगच्छत् ।

सा किल पुरुषस्य हृदयपार्श्वे जागृतवती न स्वपितवती पदं तस्य मध्ये । न जातु अतर्कितागतेऽपि वसन्तसमीरणे सखीत्व यवनिकायाः प्रान्तोऽपि व्यचलत् । कविः किल कथयति—तस्मात् प्रथमदिनादारभ्य चन्द्रापीड़स्य दर्शनमात्रेणैव समुपजातसेवारसा पत्रलेखा दिवा वा दोषा वा अविगणय्य उत्थानभ्रमणादिषु छायेव राजपुत्रस्य पार्श्वं न पर्य्यत्यजत् । चन्द्रापीड़स्यापि ततः प्रभृति तस्यां प्रतिक्षणमुपचीयमाना महती प्रीतिरजायत । स्थितस्तस्यामस्य प्रतिदिनं प्रसादः, कृता चासौ सर्वत्रैव विस्रम्भव्यापारेष्वभिन्ना सुहृदयता इति ।

अपुर्व्वोऽयं सम्बन्धः सुमधुरश्च! परन्तु अत्र नास्ति पूर्त्तिर्नारीजनाधिकारस्य, नारीजनस्य सह नारीजनेन यो नाम निरपत्रपः सख्यसम्पर्कः सम्भवति, चन्द्रापीड़ेन सार्द्धं समुत्पन्नः पत्रलेखायाः सोऽयं सम्पर्कः, कादम्बरीकाव्ये जनयतीव किञ्चिदवज्ञानं स्त्रीजनमर्य्यादायाम् । अपि नाम नेदं वृत्तं विचालयत्यन्तःकरणं पाठकानाम् । किं निमित्तमिदं विचालनम् ? नेदमाशङ्कातः, सन्देहतो वा ।

कविर्नाम यदि तयोर्लेशमपि किञ्चिदसूचयिष्यन् सम्मानितं नारीत्वं पत्रलेखाया इत्यज्ञास्यामः । परन्तु तयोः किल तरुणयोः सन्देहाशङ्कात्रपाणां स्निग्धा छायापि नालक्ष्यते । तेन खलु अपूर्णेन सम्बन्धेन परित्यक्तमन्तःपुरं पत्रलेखया, परन्तु सन्निकृष्टयोः स्त्रीपुरुषयोः प्रकृत्यैव यो लीलासङ्कोचसाध्वसादिभावः समुत्-

पद्यते ; सोऽप्यनयोर्म्मध्ये न दृश्यते ।

अतएवास्या अन्तःपुरपरिभ्रष्टाया: अन्तःपुरिकाया: कृते दूयतेऽस्माकमन्तःकरणम् । चन्द्रापीड़ेन सार्द्धं पत्रलेखाया नैकट्यमपारसामान्यम्, दिग्विजययात्रायामेकस्मिन्नेव गजपृष्ठे पत्रलेखा चन्द्रापीड़ेन सार्द्धमासनमधितिष्ठति । निशायां शिविरस्थचन्द्रापीड़: यदा अनतिदूरशयाननिषण्णे वैशम्पायनेन सह संलपति, तदा सन्निधौ क्षितितलविन्यस्तकुथोपरि प्रस्वपिति सखी पत्रलेखा। अथ यदा चन्द्रापीड़स्य कादम्बर्य्यां प्रणय: सञ्जात:, तदापि पत्रलेखा तस्मिन् खलु आत्मन: क्षुद्रस्थाने तथैवाविद्यत ।

नारी नाम पुरुषहृदयस्य यावत् स्थानमधिकरोति, तस्यातितमामल्पमिवांशं साध्यकरोत् । अतो यदा तस्मिन् हृदये महामहोत्सवसमारम्भ: सन्निकृष्ट:, तदा पत्रलेखायास्तस्मादतिक्षुद्राद्धिकारादपसारणं नावश्यकममन्यत । पत्रलेखां प्रति कादम्बर्य्या नासीदीषदपि द्वेष: । चन्द्रापीड़ेन पत्रलेखाया: सम्बन्ध इति हि सा प्रियसखीति कादम्बर्य्या परमाद्रियत ।

कादम्बरीकाव्ये पत्रलेखा यत् भूखण्डमधिकृतवती, न तत्र द्वेषसन्देहादीनां सद्भाव: । तत् स्थानं स्वर्गवन्निष्कण्टकम् ; परन्तु क्व नु खलु तत्राश्रुतविन्दु: । चलति तस्या: पुरत एव प्रबलं प्रणयामृतपानम् । किन्तु कदाचित् एतद्घ्राणेनास्या एकस्यामपि शिरायां एककोऽपि रक्तविन्दुर्न चाञ्चल्यमापेदे । अपि सा चन्द्रापीड़स्य च्छायेवानुवर्त्तिनी, तथापि राजपुत्रस्य तप्ततारुण्यसेरषदपि तापस्तां कदाचित् नास्पृशत् ।

यदा पत्रलेखाकृति कालान् कादम्बर्य्या सहावस्थाय तद्वात्तया प्रत्यावृत्ता, एवमपि यदा ललितस्मितेन दूरत एव प्रीतिरसं प्रकाशयन्ती चन्द्रापीड़ं प्राणमत्, तदा सा प्रकृतिवल्लभापि कादम्बर्य्याः प्रसादलब्धं सौभाग्यमिव वल्लभतरतामगच्छत्। युवराजश्चादरातिशयं प्रदर्शयन्नासनादुत्थाय तामालिङ्गत्।

चन्द्रापीड़स्यैतदादरालिङ्गनवर्णनेनैव कविनियमनादृता, वयन्तु नितरामिनं कविमसमानदर्शिनं वक्तुमुत्सहामहे। यदसकृत् कादम्बरीं महाश्वेतां चैकदृष्ट्या पश्यन्नयं नयनस्यान्धीभूततया बन्दीभूतां तपस्विनीमिनां द्रष्टुं नाशक्नोत्। अस्याः यत् किम प्रणयतृषार्त्तं चिरवञ्चितं हृदयमन्दिरं सर्वथैव व्यस्मरत् कविवरः। निरर्गला तस्य वाणभट्टस्य कृपणा कल्पना अनाथां राजदुहितरं प्रति नितरां पक्षपातदूषित एकदर्शी कविः पत्रलेखायाः हृदयस्थं गूढ़ं रहस्यं न किञ्चिद्व्यञ्जासीत्। कादम्बरीं पठन्तः सभ्याः पर्य्यवेक्षन्ते अन्याः सर्व्वा नायिका अनावश्यकबाहुल्येन वर्णिताः, पत्रलेखायास्तु न किञ्चित् कथितमिति कृतं सुबहुवाचा कविं प्रत्यधिक्षेपिण।

——०(＊)०——

## दशकुमारचरितस्य नायकादिनिरूपणम्—

दशकुमारचरिताख्यायिकाकाव्यस्य—नायकाः दशकुमाराः, तेषु प्रधानो मगधाधीशचन्द्रहंसस्य नन्दनो राजवाहनः। स च धीरोदात्तः, नायिका च मालवराजनन्दिनी अवन्तिसुन्दरी

स्वकीया मध्या । आलम्बनविभावौ, चन्द्रचन्दनवसन्तादय उद्दीपनविभावाः; अन्योन्यानुरागबोधकचक्षुरादिक्रिया अनुभावाः, निर्वेदादयो व्यभिचारिणः, रतिः स्थायी, सम्भोगशृङ्गाररसोऽङ्गी, वीरादयोऽङ्गरसाः, रीतिः वैदर्भी, गुणः प्रसादाख्यः, चूर्णकं गद्यमिति ।

—०००(*)०००—

## अनुरूपश्लोकाः—

मानुषीभ्यः कथं नु स्यादस्य रूपस्य सम्भवः ।
न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥ [शकुन्तला]

नान्यत्र राघवात् वंशात् प्रसूतिर्वत्सयोः क्षमा ।
दुग्धार्णवादृते जन्म चन्द्रकौस्तुभयोः कुतः ॥ [वीरचरित]

सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥ [भारवि]

अभिवर्षति योऽनुपालयन् विधिवीजानि विवेकवारिणा ।
स सदा फलशालिनीं क्रियां शरदं लोक इवाधितिष्ठति ॥ [माघ]

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥

[शकुन्तला]

पतन्ति नास्मिन् विशदाः पतत्रिणः
धृतेन्द्रचापा न पयोदपंक्तयः ।
तथापि पुष्णाति नभः श्रियं परां
न रम्यमाहार्य्यमपेक्षते गुणम् ॥ [भारवि]

गर्ज्जन् हरिः साम्भसि शैलकुञ्जे
प्रतिध्वनीनात्मकृतान्निशम्य ।
क्रमं बवन्ध क्रमितुं सकोपः
प्रतर्कयन्नन्यमृगेन्द्रनादान् ॥ [भट्टिकाव्य]

न तेजस्तेजस्विप्रसृतमपरेषां प्रसहते
स तस्य स्वोभावः प्रकृतिनियतत्वादकृतकः ।
मयूखैरश्रान्तं तपति यदि देवो दिनकरः
किमाग्नेयग्रावा निकृत इव तेजांसि वमति ॥ [उत्तरराम]

किमपेक्ष्य फलं पयोधरान् ध्वनतः प्रार्थयते मृगाधिपः ।
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया ॥
[भारवि]

शमप्रधानेषु तपोवनेषु गूढ़ं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला इव सूर्य्यकान्तास्तदन्यतेजोऽभिभवाद्दहन्ति ॥
[शकुन्तला]

पर्य्यायसेवामुत्सृज्य पुष्पसम्भारतत्पराः ।
उद्यानपालसामान्यमृतवस्तमुपासते ॥ [कुमार]

तपेन वर्षाः शरदा हिमागमो
वसन्तलक्ष्म्या शिशिरः समेत्य च ।
प्रसूनक्लृप्तिं दधतः सदर्त्तवः
पुरेऽस्य वास्तव्यकुटुम्बितां ययुः ॥ [माघ]

त्वष्टुः सदाभ्यासगृहीतशिल्पविज्ञानसम्पत्प्रसरस्य सीमा
अदृश्यतादर्शतलामलेषु छायेव या स्वर्जलधेर्जलेषु ॥ [माघ]

विललास जलाशयोदरे क्वचन द्यौरनुविम्बितेव या ।
परिखाकपटस्फुटस्फुरत् प्रतिविम्बानवलम्बिताम्बुनि ॥

गुर्वपि विरहदुःखमाशाबन्धः साहयति ॥

आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानाम् ।
सद्यःपाति प्रणयिहृदयं विप्रयोगे रुणद्धि ॥ [मेघदूत]

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
चक्रवत् परिवर्त्तन्ते दुःखानि च सुखानि च ॥

कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा ।
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ [मेघदूत]

यात्येकतोऽस्तशिखरं पतिरोषधीना-
माविष्कृतोऽरुणपुरःसर एकतोऽर्कः ।
तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवैष दशान्तरेषु ॥ [शकुन्तला]

उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः ।
तीर्थोदकञ्च वह्निश्च नान्यतः शुद्धिमर्हतः ॥ [उत्तरराम]

निसर्गतः पवित्रस्य किमन्यत् पावनं तव ।
तीर्थोदकञ्च वह्निश्च नान्यतः शुद्धिमर्हतः ॥ [वीरचरित]

सावज्ञमुन्मील्य विलोचने सकृत्
क्षणं मृगेन्द्रेण सुसुप्सुना पुनः ।
सैन्यान्यः यातः समयापि विव्यथे
कथं सुराजभ्भमन्यथाथवा ॥ [माघ]

शशंस तुल्यसत्तानामित्यादि ।
अस्याः कचानां निखिलश्च किन्नु ॥ [नैषध]

मृदुपवनविभिन्नो मत्प्रियायाः प्रणाशात् ॥ [विक्रमोर्वशी]

नवजलधरः सन्नद्धोऽयं न दृप्तनिशाकरः
सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।
अयमपि पटुर्धारासारो न वाणपरम्परा
कनकनिकषस्निग्धा विद्युत् प्रिया मम नोवशी ॥
[विक्रमोर्वशी]

हृदि विसलताहारो नायं भुजङ्गमनायकः
कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः ।
मलयजरजो नेदं भस्म प्रियारहिते मयि
प्रहर न हरभ्रान्त्यानङ्ग, क्रुधा किमु धावसि ? ॥

तेनाम्बा यदि सूतिनी वद बन्ध्या कीदृशी भवति ।
[हितोपदेश]

तपेन वर्षाः शरदा हिमागमो
वसन्तलक्ष्म्या शिशिरः समेत्य च ।
प्रसूनकॢप्तिं दधतः सदर्त्तवः
पुरेऽस्य वास्तव्यकुटुम्बितां ययुः ॥ [माघ]

त्वष्टुः सदाभ्यासगृहीतशिल्पविज्ञानसम्पत्प्रसरस्य सीमा
अदृश्यतादर्शतलामलेषु छायेव या स्वर्जलधेर्जलेषु ॥ [माघ]

विललास जलाशयोदरे क्वचन द्यौरनुविम्बितेव या ।
परिखाकपटस्फुटस्फुरत् प्रतिविम्बानवलम्बिताम्बुनि ॥

गुर्वपि विरहदुःखमाशाबन्धः साहयति ॥

आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानाम् ।
सद्यःपाति प्रणयिहृदयं विप्रयोगे रुणद्धि ॥ [मेघदूत]

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
चक्रवत् परिवर्त्तन्ते दुःखानि च सुखानि च ॥

कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा ।
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ [मेघदूत]

यात्येकतोऽस्तशिखरं पतिरोषधीना-
माविष्कृतोरुणपुरःसर एकतोऽर्कः ।
तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवैष दशान्तरेषु ॥ [शकुन्तला]

उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः ।
तीर्थोदकञ्च वह्निश्च नान्यतः शुद्धिमर्हतः ॥ [उत्तरराम]

निसर्गतः पवित्रस्य किमन्यत् पावनं तव।
तीर्थोदकञ्च वह्निश्च नान्यतः शुद्धिमर्हतः॥ [वीरचरित]

सावज्ञमुन्मील्य विलोचने सकृत्
क्षणं मृगेन्द्रेण सुसुप्सुना पुनः।
सैन्यान्यः यातः समयापि विव्यथे
कथं सुराजन्भमन्यथाथवा॥ [माघ]

शशंस तुल्यसत्त्वानामित्यादि।
अस्याः कचानां निखिलश्च किन्तु॥ [नैषध]

मृदुपवनविभिन्नो मत्प्रियायाः प्रणाशात्॥ [विक्रमोर्वशी]

नवजलधरः सन्नद्धोऽयं न दृप्तनिशाकरः
सुरधनुरिदं दूराकृष्टं न नाम शरासनम्।
अयमपि पटुर्धारासारो न वाणपरम्परा
कनकनिकषस्निग्धा विद्युत् प्रिया मम नोर्वशी॥
[विक्रमोर्वशी]

हृदि विसलताहारो नायं भुजङ्गमनायकः
कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः।
मलयजरजो नेदं भस्म प्रियारहिते मयि
प्रहर न हरभ्रान्त्यानङ्ग, क्रुधा किमु धावसि ?॥

तेनाम्बा यदि सूतिनी वद बन्ध्या कीदृशी भवति।
[हितोपदेश]

मा जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति ।
तस्याजननिरेवास्तु जननीक्लेशकारिणः ॥ [माघ]

उद्यमेन हि सिध्यन्ति कार्य्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥ [हितोपदेश]

उपायमाश्रितस्यापि नश्यन्त्यर्थाः प्रमाद्यतः ।
हन्ति नोपशयस्थोऽपि शयालुर्मृगयुर्मृगान् ॥ [माघ]

वयं क्व वर्णाश्रमरक्षणोचिता
क्व जातिहीना गुणजीवितच्छिदः ।
सहापकृष्टैर्महतां न सङ्गतं
भवन्ति गोमायुसखा न दन्तिनः ॥ [माघ]

प्रतिवाचमदत्तकेशवः शपमानाय न चेदिभूभुजे ।
अनु हुंकुरुते घनध्वनिं न हि गोमायुरुतानि केशरी ॥ [माघ]

श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातम्
वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हन्तैकस्मिन् क्वचिदपि न ते चण्डि, सादृश्यमस्ति ॥ [मेघ]

## प्रायशस्तुल्यम्---

कलमन्यभृतासु भाषितं कलहंसीषु मदालसं गतम् ।
पृषतीषु विलोलमीक्षितं पवनाधूतलतासु विभ्रमाः ॥
त्रिदिवोत्सुकयाप्यवेक्ष्य मां निहिताः सत्यममी गुणास्त्वया ।
विरहे तव मे गुरुव्यथं हृदयं न त्ववलम्बितं क्षमा ॥ [रघुवंश]

अंशतस्तुल्यम्---

मृदुपवनविभिन्नो मत्प्रियायाः प्रणाशात्। इत्यादि
सति कुसुमसनाथे कं हरेदेष बर्हः ॥ [विक्रमोर्वशी]

प्रतिकूलेनापि पतिं सेवन्ते भर्तृवत्सलाः साध्व्यः।
अन्यसरितामपि जलं प्रापयन्त्युदधिम् ॥ [मालविका]

महात्मनोऽनुगृह्णन्ति भजमानान् रिपूनपि।
सपत्नीः प्रापयन्त्यब्धिं सिन्धवो नगनिम्नगाः ॥ [माघ]

परिपाण्डुदुर्बलकपोलसुन्दरं
दधती विलोलकवरीकमाननम्।
करुणस्य मूर्त्तिरथवा शरीरिणी
विरहव्यथेव वनमेति जानकी ॥ [उत्तरराम]

वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणिः।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्त्ति ॥ [शकु]

अनियतरुदितस्मितं विराजत्
कतिपयकोमलदन्तकुड्मलाग्रम्।
वदनकमलकं शिशोः स्मरामि
स्खलदसमञ्जसमञ्जुजल्पितं ते ॥ [उत्तरराम]

आलक्ष्य दन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन्।
अङ्काश्रयप्रणयिनस्तनयान् वहन्ती
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ [शकुन्तला]

नच न परिचितो न चापरम्य-
श्चकितमुपैमि तथापि पार्श्वमस्य ।
सलिलनिधिरिव प्रतिक्षणं मे
भवति स एव नवो नवोऽयमक्ष्णोः ॥ [मालविका]

भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम् ।
अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः ॥ [रघुवंश]

पूर्वं त्वयाप्यभिमतं गतमेवमासी-
च्छ्लाघ्यं गमिष्यति पुनर्विजनेन भर्तुः ।
कालक्रमेण जगतः परिवर्त्तमाना
चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः ॥ [स्वप्नवासव]

नन्वात्मानं बहुविगणयन्नात्मनैवावलम्बे
तत् कल्याणि त्वमपि सुतरां मा गमः कातरत्वम् ।
कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ [मेघदूत]

यस्यां न प्रियमण्डनापि महिषी देवस्य मन्दोदरी
स्नेहाल्लुम्पति पल्लवान् न च पुनर्वीजन्ति यस्यां भयात् ।
वीजन्तो मलयानिला अपि करैरस्पृष्टबालद्रुमा
सेयं शक्ररिपोरशोकवनिका भग्नेति विज्ञाप्यताम् ॥
[अभिषेकनाटक]

पातुं न प्रथमं व्यवस्यति पयो युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।

आदिष्ट वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥

[शकुन्तला]

हृदयेनेह तवाङ्गैर्द्विधाभूतेव गच्छति ।
यथा नभसि तोये च चन्द्रलेखा द्विधाकृता ॥ [बालचरित]

गच्छति पुरः शरीरं धावति पश्चादसंस्थितं चेतः ।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥ [शकुन्तला]

विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्यया
वृक्षाः पुष्पफलैः समृद्धविटपाः सर्व्वे दयारक्षिताः ।
भूयिष्ठं कपिलानि गोकुलधनान्यक्षेत्रवत्यो दिशः
निःसन्दिग्धमिदं तपोवनमयं धूमो हि बह्वाश्रयः ॥

[स्वप्नवासवदत्ता]

नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः ।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगाः
तोयाधारपथाश्च वल्कलशिखानिस्यन्दरेखाङ्किताः ॥

शमप्रधानेषु तपोवनेषु
गूढ़ं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला इव सूर्य्यकान्ता-
स्तदन्यतेजोऽभिभवाद्दहन्ति ॥ [शकुन्तला]

इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।
अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकरसः
किमस्याः न प्रेयो यदि पुनरसह्यो न विरहः ॥
[उत्तररामचरित]

सेयं ममाङ्गेषु सुधारसच्छटा
सुपूरकर्पूरशलाकिकादृशोः ।
मनोरथश्रीर्मनसः शरीरिणी
प्राणेश्वरी लोचनगोचरं गता ॥

—०[०००]०—

